THE

# KASHMIR SERIES OF TEXTS AND STUDIES

PUBLISHED UNDER THE
authority of the Government of His Highness
Major General Mahārāja Sir Pratāp Singh Sahib
Bahadur, G. C. S. I., G C I E., Mahāraja of
*Jammu and Kashmir State*

EDITED BY

J. C. CHATTERJI, B. A. (Cantab), VIDYĀVĀRIDHI.

WITH THE
Co-operation of the Pandits of the
RESEARCH DEPARTMENT,
*KASHMIR STATE.*

Vol. VI.

# कश्मीरग्रन्थावली

श्रीमत्-कश्मीर-महाराजादेशेन
सम्पादिता।

## षष्ठखण्डम्




SRINAGAR
KASHMIR

1913.

THE

# SPANDA KĀRIKĀS

WITH THE

## VIVRITI OF RĀMAKANTHA

अथ

# स्पन्दकारिकाः

रामकण्ठाचार्यकृतविवृत्युपेताः




श्रीनगर

( कश्मीर )

संवत् १९६९

Price Rs. 2-12

ओं नमः स्वस्पन्दात्मसंविन्मूर्तये शंभवे ।

अथ

# स्पन्दकारिकाः

## श्रीरामकण्ठाचार्यविरचितविवृत्युपेताः ।

### प्रथमो निःष्यन्दः ।

दशादिकालाद्यैरकलितचिदालोकवपुषः
सदा तादृक्स्वात्मानुभवितृतया विस्फुरति यः ।
निजो धर्मः शम्भोरनुपमचमत्कारसरसः
परं शाक्तं तत्त्वं जगति जयति स्पन्द इति तत्[1] ॥ १ ॥

१ दिगादिवृत्तयः शक्तावनुद्भिन्नप्रसरतया तन्मया एव स्वालक्षण्येन भातुमप्रभविष्णवः, शक्तिरपि शक्तिमदौन्मुख्येन तन्मात्रावशेषा केवलमनुभवितृरूपविस्फुरणमाश्लिष्टा । अत एव दिगादिकलनया अकलितं चिन्मात्रं वपुः इति प्रथमपादेन शक्तिमान् परामृष्टः । शेषेण स्पन्दशब्दस्य सार्थकतां प्रकटयितुं शक्तिमदभिव्यञ्जिका तत्समवायिनी ब्रह्माह्लादादिपर्याया शाक्तविजृम्भणा परामृश्यते । जयति-पदाभिधेयं सर्वोत्कर्ष्यशालित्वं शाक्ततत्त्वस्य अवगम्यते । ततश्च तत्समावेशरसपरिभोगविगाहनवतां भक्तिभाजां भुक्तिमुक्तिसंपत्तिपात्रता विश्वाभिलषणीयता च ध्वन्यते

तज्ज्ञैरदर्शितदिशः स्वयमाविशन्तः
केचिन्निसर्गगहनं विषमं भ्रमन्तु ।
तेनैव यत्पुनरमी हतवर्त्मनान्यान्
आकारयन्ति गमनाय महान्भ्रमोऽयम्[२] ॥ २ ॥

नानावादानिलौघानवसरकृतान्योन्यसंघट्टघोरो-
द्धातानापादयद्भिः श्रवणविदलनोद्दामशब्दप्रबन्धान् ।
शास्त्राब्धिः क्षोभ्यते यैर्विवरणरभसादुग्रदावर्तभीम-
भ्रान्तिभ्रष्टागमार्थप्लवविधुरमतिस्तारितोऽर्थी जनस्तैः ॥ ३ ॥

कश्चिद्भिन्नरुचिर्विदन्नपि परं तत्त्वं विपर्यस्यति
द्वेषध्वान्तविरुद्धबुद्धिरितरो जात्यैव चान्यो जडः ।
इत्थं दुर्लभ एव सर्वहृदयग्राही गिरां संग्रहः
किंत्वेतेऽद्य विवेकिनः कतिपये सन्त्यत्र पात्रं सताम् ॥ ४ ॥

---

२ विज्ञजनोपदिष्टसत्संप्रदायमन्तरेण निसर्गगम्भीरं शैवागमाब्धिमवगाहमानानां वामाख्यशक्तिसंवृतसंविदां स्वोपज्ञतया संभावनावतां, वस्तुतो विना पारतीरलाभं मध्ये निमग्नप्रायतैव । तदीयदुष्पथे तु भ्रमिमनुभवतां तदनुगानां या पारदर्शनाय तच्चोदना, हन्त तत् चक्षुरुन्मेषमन्धकूपनिपतनम् । अतः तादृशजनान् पारं लङ्घयितुमयं मदीयो यत्नः इति ।

---

पं० १ क. ग. पु० परस्तत्त्वमिति पाठः ।

केनापि ग्रथितां प्रसारणधिया कैश्चिद्द्विसूत्रीकृता-
मेकीकृत्य यथागमं विरचितां स्पन्दार्थसूत्रावलीम् ।
ईशानुग्रहशक्तिवज्रशिखया विद्धेषु विद्वन्मनो-
माणिक्येषु निवेशयाम्यहमिमां कर्तुं कृतार्थां द्वयीम्[३] ॥ ५ ॥

---

**यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ ।**
**तं शक्तिचक्रविभवप्रभवं शंकरं स्तुमः ॥ १ ॥**

'तं शंकरं'—श्रेयसः कर्तारं 'स्तुमः'—प्रशंसामः । तं कं, 'यस्य उन्मेष-निमेषाभ्यां'—शक्तिप्रसरप्रलयाभ्यां 'जगतो'—विश्वस्य 'प्रलयोदयौ'—विनाशप्रादुर्भावौ । अत्र यथासंख्यं न विवक्षितमिति वक्ष्यामः । तं कीदृशं 'शक्तिचक्रविभव-

३ प्रथमं श्रीवसुगुप्तपादैः सूत्रावलिः दृब्धा । तदनु भट्टश्रीकल्लटादिभिः सिद्धैः संवृतार्थविवृत्या प्रगुणीकृता । अधुना तु सूत्रसंदर्भण-प्रगुणीकरणात्म पूर्वसिद्धं कार्यद्वयं सफलीकर्तुं सैव इयं स्पन्दार्थसूत्रावली, एकीकृत्य संयोज्य, वृत्तिसंवादितार्थविवरणं क्रोडीकृत्य च, आगमाम्नातपरमार्थनिर्णीत्या विशिष्टरचनया उपेता, पराशक्तिपाताख्यचुम्बकमणिशिखया अनुविद्धासु सहृदयाना विमलमनोरत्नजातिषु निगुम्फ्यते । यत्परिमलसौभाग्यादिचर्चनया सुधामयस्वामिप्रासादमध्यारुह्य निरतिशयसुखानुभूतिरनर्गलविकचितवृत्त्या सुरस्यते इति ।

पं० १ ख. ग. पु० कैश्चिद्द्विसूत्रीकृताम् इति पाठः ।

प्रभवं'–शक्तीनां वक्ष्यमाणस्वरूपाणां 'चक्रं'– समूहः, स एव 'विभव'–ऐश्वर्यं, तस्य 'प्रभवं'–कारणम्,–इति पदसंबन्धयोजना तावत् सुबोधा। वस्तुसंगतिस्तु कथं?–इति विचार्यम्। शंकरस्तावत् नित्यम् अव्यभिचरदेकस्वभाव एक एव पदार्थः परमार्थसन्,–इति प्रकरणस्य अस्य तात्पर्यं तथानिर्वाहात्; तस्य परस्परविरुद्धौ अनित्यौ निमेषोन्मेषात्मकौ अवस्थाविशेषौ संबन्धित्वेन कथं प्रतिपादितौ? कर्तृप्रथया हि अनया एवं प्रतिपाद्यते–शंकर उन्मिषति निमिषति इति। एवं च अनित्यावस्थायोगित्वं नित्ये भगवति अनुपपन्नम्, तत् कथमुक्तं 'यस्योन्मेषनिमेषाभ्याम्' इति?

अत्रोच्यते। उन्मेष-निमेषशब्दाभ्यां तदुपचरितवृत्तिभ्याम् इच्छामात्रमेकं शंकरसंबन्धि प्रतिपाद्यते; स च तस्य नित्यो धर्मः स्वभावभूतः; तस्य उन्मेष-निमेषशब्दवाच्यत्वं द्वित्वं च

---

पं० १ क. ग. पु० कर्तृप्रथा हि इति पाठः।

उपचारात्; यतो जगंत एव परमेश्वरमायाश-
क्त्युद्भावितकार्यरूपत्वात् अनित्यस्य प्रलयोदय-
संभवे साति, निमेषोन्मेषौ वस्तुतः संभवतः। तौ
च ईश्वरेच्छामात्रनिमित्तकौ;—इति उदयात्मको-
न्मेषहेतुत्वात् ईश्वरेच्छैव उन्मेषशब्देन, प्रलया-
त्मकनिमेषहेतुत्वात् निमेषशब्देन च उपचर्यते।
यथा आयुष्कारणत्वात् आयुःशब्देन घृतम्।
सा च अव्यतिरिक्ता शंकरस्य शक्तिः; तदवगम
एव च आत्मैश्वर्यप्रत्यभिज्ञालक्षणसिद्धेर्हेतुः।
सा च 'दिदृक्षयेव सर्वार्थान्' (३ नि. ११ का.)
इत्यत्र वक्ष्यमाणन्यायेन सांसारिकपुरुषप्रसिद्धे-
च्छासादृश्यात् तदवगमोपायतया इच्छाशब्देन
व्यपदिश्यते। यथा हि पुरुषस्य इच्छावस्था-
याम् इष्यमाणः पदार्थः स्वरूपाव्यतिरेकेणैव
अवतिष्ठते, तथा भगवतः शक्तौ अनन्तावभा-
सविशेषचित्रं जगत् नानापि अनुपजातविशे-
षात् स्वरूपात् अव्यतिरेकेणैव अवतिष्ठते। सेयं
परमार्थसती शिवदशा, या एवं तद्विद्भिः स्तूयते

'सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः ॥'

इति। तथा ईश्वरप्रत्यभिज्ञायाम्

'या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता ।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः ॥'

इति। इत्थम् एकस्या एव पारमेश्वर्याः शक्तेः इच्छा-ज्ञान-क्रियाव्यपदेशः इदन्ते न्मिषन्मायाशक्तिजनित एव; यतः शिवदशामेकां मुक्त्वा मायाशक्तिः सर्वत्र कृतपदा, यद्वशात् एकस्मिन् शिवतत्त्वे परमार्थसति सदाशिवादि-तत्त्वान्तरव्यपदेशः प्रक्रियाशास्त्रेषु। एतच्च पुरस्तात् 'परामृतरसापायः' ( ३ नि० १४ का० ) इत्यादिश्लोकव्याख्यानावसरे प्रतिपादयिष्यते। सा एवंलक्षणा पारमेश्वरी शक्तिः स्वलीलोल्लासितस्य जगतोऽवस्थाद्वयहेतुत्वात् द्वित्वेनापि च उपचरिता। तेन इदमत्र प्रथमश्लोकपूर्वार्धे तात्पर्यम्,–यस्य इच्छामात्रेण जगतः प्रलयोदयौ तं स्तुमः। तच्च यथासंख्यम् अत्र मुख्यया

वृत्त्या नापेक्षणीयम् उन्मेषेण उदयो, निमेषेण प्रलयः,—इति तु अर्थसंख्या समवैति । एतच्च, इच्छामात्रः उन्मेषनिमेषौ — इत्येतावत्तात्पर्यं प्रतिपादयितुं, स्वयं वृत्तिकृता भट्टकल्लटेन व्याख्यातम्

'संकल्पमात्रेण..................'

इति । ये तु यथासंख्यसमर्थनानुरोधात्, यस्य उन्मेषे क्रियाशक्तिप्रतिसंहारात् स्वरूपविकासे जगतः प्रलयो विनाशः, निमेषे प्रसृतक्रियाशक्तित्वात् स्वरूपसंकोचरूपे जगतः उदय उद्भवः, इति व्याचक्षाणाः, शंकरस्यैव पारमार्थिकौ उन्मेषनिमेषौ धर्मत्वेन प्रतिपादयन्ति, ते च काल्पनिकमेव अर्थं परमार्थत्वेन प्रतिपद्यमानाः तथा दर्शनस्य अस्य अन्तरं ननु प्रविष्टाः?—इति नमस्तेभ्यः ।

ननु नित्याव्यभिचरदेकस्वभावस्य भगवतः शक्तिरपि तादृगेव प्रतिपादिता, तयोरभेदाभ्युपगमात् । तत् कथं व्याख्यातं शक्तीनां चक्रमिति ? अत्र ब्रूमः । ननु इदमेव तत् निरति-

शयम् ऐश्वर्यम् ईश्वरस्य इह विवक्षितं, यत् सर्वत्र 'अहम्'—इति स्वरूपपरामर्शमात्राऽव्यभिचारेऽपि निरवधिविजृम्भमाणविचित्रावभासखचितं त्रैलोक्यालेख्यम् इदम् उल्लिखति; इत्थम् उल्लिख्यमानमपि एतत् परमार्थतः परामृश्यमानं तत्स्वभावात् मनागपि च यत् न भिद्यते। यथोक्तम्

'परमेश्वरता जयत्यपूर्वा
तव सर्वेश यदीशितव्यशून्या।
अपरापि तथैव ते ययेदं
जगदाभाति यथा तथा न भाति॥'

इति। अन्यत्रापि

'लिखते जगत्त्रितयचित्रमद्भुत-
प्रतिभापरिस्फुरितशंसि ते नमः।
सुसितैकसूक्ष्मनिजशक्तिवर्तिका-
रचितावभासशतशोभि शंभवे॥'

इति। एतच्च एवंविधं शांकरमैश्वर्यं तदनुग्रहग्रस्तसमस्तमायातमस्त्वप्रकाशितपरमार्थानां स्वसंवेद्यमेव सुप्रबुद्धानां महात्मनाम्। ईश्वरशक्तिपातः बोधितानां तु सम्यक् उपनतसद्गुरू-

पदे क्रमेण अभ्यस्यतां प्रत्यासन्नस्वानुभवम् । अप्रबुद्धाः पुनः अनुपदेश्या एव, इति । एतदेव इह पुरस्तात् प्रतिपादयिष्यमाणम् । तत् एवंविधे स्थिते शंकरस्य पारमैश्वर्यें या इमाः परमाद्भुतमायाशक्तिवशात् चिदचिद्भेदेन द्विविधा अपि अवान्तरभेदात् अपर्यन्ता भावव्यक्तयः, सा परमेश्वरस्य स्वरूपात् अभिन्ना शक्तिरेकैव तात्त्विकी, इदमिति परामर्शभेदमात्रजन्मना तु नानानामरूपविभक्तभावभेदेन अवभासमाना सती बहुत्वेन व्यपदिष्टा 'शक्तीनां चक्रम्'–इति । शक्तिशब्देन च भावव्यक्तीनां व्यपदेशे परमेश्वरात् शक्तिमतो भेदाभावप्रतिपादनमेव प्रयोजनम् । एता एव विभवः ऐश्वर्यमीश्वरस्य, ताभिरेव तस्य इत्थं विश्वरूपत्वात् । यथोक्तं पारमेश्वरे

'शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांश्च महेश्वरः ॥'

पं० ३ इह-पदं ग० पुस्तकात् प्रक्षिप्तम् ।

इति। एवं च स्वश[क्ति]भूतस्य अस्य विभवस्य असौ 'प्रभवः'—उत्पत्तिकार[ण]ं, न तु स्वरूपव्यतिरिक्तस्य अन्यतः कुतश्चित् लब्धात्मनः; अतश्च 'यस्य' इत्यादिना प्रथमश्लोकपूर्वार्धेन शंकरस्य जगत्कारणत्वे प्रतिपादितेऽपि, शक्तिचक्रात्मकस्वैश्वर्यभूतजगत्प्रभवत्वलक्षणविशेषप्रत्यायनपरम् इदम् 'तम्' इत्य[ादि]। श्लोकापरार्धेन विशेषणं, न पुनरुक्तम्। एतदेव वृत्तिकृता व्याख्यातम्

'विज्ञानदेहात्मकस्य शक्तिचक्रैश्वर्यस्य
उत्पत्तिहेतुत्वम् ...... .... .......... .'

इत्यादिना। 'विज्ञानदेहो'—विशुद्धसंविन्मात्रमूर्तिः महेश्वरः, स 'आत्मा'—स्वभावो यस्य '[श]क्तिचक्रात्मन ऐश्वर्यस्य'—इति हि तस्य अर्थोऽभिमतः। किं च यस्य एवंविधधर्माव्यभिचारः स परमेश्वरो व्याख्यास्यमानार्थेन शंकरशब्देन इह प्रति-

---

प० १ क० पु० स्वशक्तिविभवस्य इति पाठः।

पादितः। स च आत्मैव नान्यः,–इति यत्तच्छब्दोपलक्षितवाक्योपनिबन्धः सूचयति; यतः श्लोकपञ्चाशत्प्रपञ्चितप्रकरणार्थपर्यालोचनया तस्यैव प्रोक्ताविशेषणाव्यभिचारः पर्यवस्यति। एतदेव वृत्तिकृता दर्शितम्

'अनेन स्वस्वभावस्यैव शिवात्मकस्य'

इति व्याचक्षाणेन; 'स्वस्य'–आत्मनः 'स्व'–आत्मीयो 'भावः'–स्वरूपं, स्वस्वभावः,–इति हि तस्य विग्रहोऽभिप्रेतः। तत् अस्य आद्यश्लोकस्य अयं तात्पर्यार्थः प्रकरणनिर्वाह्यवस्तुप्रतिज्ञाबन्धरूपः यत्,–परमेश्वरः इच्छामात्रेण जगतः प्रलयोदयौ विदधाति, लब्धस्थितिकमपि जगत् तच्छक्तिविभूतिरेवैव मायावशात् तु नानात्वेन अवभासते,–इति। इदमेव अर्थद्वयम् अत्र प्रकरणे विस्तार्यते उपपत्त्युपलब्धिप्रदर्शनक्रमेण। तथा च–प्रथमत एव मायावशात् स्वरूपप्रत्यवमर्शस्य अनुल्लासात्, वेद्यात् देहादेरव्यतिरेकेण प्रतिभासमानस्यैव

आत्मनो व्यतिरेकः प्रदर्श्यते। ततो वेद्यस्यैव जगतो वेदकात् तस्मात् उपलब्धतात्त्विकस्वभावात् शक्तिभावेन अव्यतिरिक्तत्वम्,—इति अस्मिन्नेव अर्थद्वये उपपत्त्युपलब्धी,—इति चतुर्निःष्यन्दः स्पन्दसिद्धान्तोऽनेन श्लोकेन आसूत्रितः। सिद्धान्तता च अस्य, सिद्धस्यैव—न साध्यस्य—ईश्वरतत्त्वस्य, अन्तो—निष्ठा निश्चयः, इति कृत्वा; यदि वा नानासिद्धान्तोदितस्य ज्ञान-क्रिया-योग-चर्यादिकस्य अनुग्रहस्य, एतद्विज्ञानं संस्कारकत्वात् साफल्यकारणम् इत्यस्यैव सिद्धान्तता। किंच प्रारब्धप्रकरणाविघ्नपरिसमाप्त्यभिप्रायेणापि अनेन आदिश्लोकेन संबन्धादयोऽपि सूच्यन्ते—इत्यादिशन्ति गुरवः। तच्च सर्वं 'शंकरं स्तुमः' इत्यत एव वाक्यात् लभ्यते। यतः उपायलक्षणं श्रेयःशास्त्ररूपं मुख्यतया, उपेयलक्षणं च आत्मैश्वर्यप्रत्यभिज्ञारूपं; तदुभयमपि

पं० १० क. पु० संस्कारकारणत्वात् साफल्यकारकत्वम् इति पाठः।

'शम्' इत्यनेन पदेन उक्तम्। तस्य कर्ता शंकरः इत्यन्वर्था इयं संज्ञा परमेश्वरस्य। अत एतच्छास्त्रात्मकश्रेयसः साक्षात् कर्ता परमेश्वर एव। तत्संप्रदायमिमं निबध्नद्भिः कर्तृव्यपदेशोऽधिगतः। एवम् ईश्वरशास्त्रयोः कर्तृकार्यलक्षणः संबन्धः। अभिधेयमिह शंकरस्वरूपामिति 'स्तुमः' इति पदात् प्रतीयते। उपादेयवस्तुस्वरूपप्रतिपादनमेव स्तुत्यर्थः,—इति हि निश्चितं विपश्चिद्भिः। अतः शास्त्राभिधेययोः प्रतिपाद्य-प्रतिपादकभावलक्षणः संबन्धः। प्रयोजनं च आत्मैश्वर्यप्रत्यभिज्ञात्मकं शंकरपदादेव अवसीयते। परस्यापि हि श्रेयसः कर्तृत्वेन ईश्वर एव व्याख्यातः;—इति अभिधेय-प्रयोजनयोः उपायोपेयभावलक्षणः संबन्धः। इति व्याख्याताः संबन्धादयस्त्रयः। अभिधानमस्य शास्त्रस्य स्पन्द इति। यतः 'स्पन्दतत्त्वविविक्तये।' (१ नि० २१ का० २ पा०) इत्यादौ इहैव व्यवहारः। स्पन्द-शब्दश्च अयं स्व-

स्वभावपरामर्शमात्रस्य नित्यस्य शून्यताव्यतिरेचनकारणभूतस्य तावन्मात्रसंरम्भात्मनः शक्त्यपराभिधानस्य पारमेश्वरस्य धर्मस्य किंचिच्चलनात् 'स्पन्द' इति, अर्थानुगमात् वाचकत्वेन व्यपदिष्टः। तत्प्रतिपादनहेतुत्वात् शास्त्रमपि इदं स्पन्दशब्देन अभिधीयते। विषय[४]श्च अस्य विशुद्धश्रद्धाभक्तिप्रकर्षपिशुनितपरमेश्वरपरशक्तिपातप्रोन्मील्यमानस्वभावालोकतिरस्कृतसकलसंदेहान्धकारत्वात् प्रबुद्धः सम्यगुपनतदीक्षादिसंस्कारो गुरुवचनचोदनामात्रावशेषस्वात्मैश्वर्योपलब्धिः; तादृशस्यैव इह उपदेश्यत्वेन पुरस्तात् परिगृहीतत्वात्।—इति अभिधान-विषयावपि अवगन्तव्यौ। व्याख्यातश्च अयमादिश्लोकः समस्तप्रकरणार्थोपक्षेपगर्भः ॥ १ ॥

ननु सुर-नर-तिर्यगादिभेदेन प्रविभक्ततनु-करण-भुवनाभोगादेः अपरिसंख्येयावा-

४ अत्र विषयशब्देन उपदेशविषयः अधिकारी निर्दिश्यते, शास्त्रान्तरेषु विषयशब्देनाभिधेयं विवक्षितम्, इह तु अभिधेयं व्याख्यातपूर्वम्।

न्तरभेदाभिन्नस्य प्राणभृत्प्रपञ्चस्य सुख-दुःख-क्षुत्तृष्णा-जरामरणाद्द्वन्द्वानुविद्धस्य जात्याद्यवच्छिन्नाभिमानभाजः सततं संसरतः परस्परदूरभिन्नो यः स्वभावः, स कथं समनन्तरप्रतिपादिताद्भुतैश्वर्यशंकराभेदेन प्रतिज्ञातः येन एवं व्याख्यातम्? यस्य एवंप्रतिपादितविशेषणाव्यभिचारः, स कथं शंकरो ममैव आत्मा?—इति अत आह

**यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम्।**
**तस्यानावृतरूपत्वान्न निरोधोस्ति कुत्रचित् ॥ २ ॥**

'तस्य'—अस्य वक्ष्यमाणस्य तत्त्वस्य 'न क्वचित्'—कस्मिंश्चित् देशे काले आकारे अवस्थाविशेषे वा 'निरोधः'—अवच्छेदः इदन्तेयत्ताव्यपदेशहेतुः वेद्यवस्तुधर्मः 'अस्ति'—विद्यते; कुतो हेतोः? 'अनावृतरूपत्वात्'—जात्या-

पं० २ द्वन्द्वपदं ग० पुस्तकात् प्रक्षिप्तम्।
पं० १३ ख० पु० आकारावस्थेति पाठः।

व्यभिमानरूपेण मलेन अनावृतम् अनाच्छादितं रूपं यस्य तत्, तथा तस्य भावः तत्त्वं तस्मात्। तस्य अनावृतत्वोपपत्तिद्योतिपादद्वाय विशेषणमाह 'यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम्'—इति। 'इदम्' इति वेद्य तथावस्थितं; 'सर्वम्' इति यत्र यत्र दर्शने यथा यथा परिकल्पितं; तत् अशेषं कार्यं कर्त्रधीनसद्भावं 'यत्र'—यस्मिन् वेदकत्वेन कर्तृत्वेन च अवस्थिते आधेयसमस्तपदार्थसार्थसामान्याधारभूते एकस्मिन् 'स्थितं'—तेन तेन पृथिव्यादिना घटपट-गवादिना वा रूपेण लब्धप्रतिष्ठं, यदन्तर्गतस्य सर्वस्य वस्तुनः प्रकाशमानत्वात् स्वरूपसत्तासादनमित्यर्थः। ननु सूर्यादिप्रकाशान्तर्गतं घटपटादिद्रव्यं तेन तेन रूपेण प्रकाशमानत्वात् सत्ताम् आसादयति, तथैव सर्वमिदं कार्यं 'यत्र स्थितम्' इत्युक्तम्, उत अन्येन प्रकारेण? इत्याह—'यस्माच्च निर्गतम्' इति,—प्रधानादिकारणान्तरपरिहारेण 'यस्मात्'

एककर्तृभूतात् एकस्मात् कारणात् 'निर्गतम्' उद्भूतम्। तत् अयमत्रार्थः,—यः पदार्थः सर्वस्य इदन्तापन्नतया प्रमेयभूतस्य शास्त्रेषु नानाविभागेन संगृहीतस्य तत्त्वव्रातस्य एकः प्रकाशकत्वेन स्थितिहेतुत्वात् आधारभूतः, कर्तृत्वात् च प्रभवः कारणं, स्वयं च वेद्यत्वसंस्पर्शासहिष्णुत्वात् मायीयप्रमात्रन्तराविषयभूतोऽनवच्छिन्नमाहिमा निर्मलचिन्मात्रैकरूपः, स इह स्वस्वभावशब्देनाभिमतः, न तु जात्याद्यवच्छिन्नाभिमानसंकोचितात्मनो मायाशक्त्यपह्नुतस्वैश्वर्यसंविदः कार्यवर्गान्तःपातिनः प्राणिप्रबन्धस्य स्वरूपं स्वस्वभावः।—इति युक्तम् उक्तम् 'आत्मैव शंकर' इति। तत् एतत् वृत्तिकृता

'कथं पुनः स्वस्वभावस्यैव संसारिणः शिवत्वेन व्यपदेशः'

इति आक्षिप्य

'यत्र स्थितम् इदं जगत्, यस्मात् च उत्पन्नम्'

---

पं० ६ ग० पु० वेद्यसंस्पृष्टत्वासहिष्णुत्वादिति पाठः।
पं० १९ मूलपाठस्तु वृत्तौ 'शिवत्वेन निर्देश' इत्यस्ति।

इति विवृणवता प्रतिसमाहितम्।

'तस्य संसार्यवस्थायाम्'

इति। वृत्तिरेवं बोद्धव्या,—संसारिणां तन्मायावभासितजात्याद्यभिमाना मायीयावस्था, तस्यामपि तस्य स्वस्वभावस्य तत्त्वतो निरोधो नास्ति इति ॥ २ ॥

ननु योऽयं स्वभावाख्य एवंप्रतिपादितः पदार्थः, स किं केवलात् आगमाज्ञामात्रात् ओम् इति अभ्युपगन्तव्यः, उत प्रगुणाभ्याम् उपपत्त्युपलब्धिभ्यां व्युत्पाद्याभ्यां प्रतिपत्तिगोचरतां नेतुं शक्यः?—इति संशयच्छेदाय श्लोकान्तरेण उपपत्तिं यां प्रतिपादयिष्यति तदवतारणार्थम् इदं तावत् [illegible] ते,—सकलप्रकरणप्रतिपाद्यार्थतत्त्वलब्धप्रतिष्ठया परया प्रज्ञया स्वस्वभावस्य परामर्शावसरे रविकिरणस्पृष्टनीहारनिकरनिःसारनश्यत्स्वरूपया, संप्रति तु द्वैतमहामोहतिमिरात्मना विजृम्भमाणया मा-

पं० ३ वृत्तिरेव इत्येव सर्वेषु मूलपुस्तकेषु पाठः।
पं० १२ क० ख० पु० प्रतिपादयतीति पाठः।

याशक्त्या आविष्टानां सर्वप्रमातॄणां पारमार्थिकात् वेदकात् स्वभावात् प्रच्युत्यैव वेद्य एव देहादौ वेदकभावेन अहमिति प्रत्ययः परमदुर्भेदस्य भेदग्रन्थेर्मूलम् । ततस्तेभ्यो देहादिभ्यः तस्य अहंप्रत्ययात्मनः स्वस्वभावस्य व्यतिरेचनाय समनन्तरप्रतिज्ञातस्य सर्वथा निरोधाभावस्य उपलब्धये स्वानुभवप्रमाणाम् उपपत्तिं प्रस्तावयन् आह

**जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति ।**
**निवर्तते निजान्नैव स्वभावादुपलब्धृतः ॥ ३ ॥**

अतः तस्य स्वभावस्य न क्वचित् निरोधः अस्ति, यतः असौ 'निजात्' आत्मीयात् अनुपाधेः 'स्वभावात्' स्वरूपात् 'न निवर्तते' नान्यथा भवति, न च्यवते इति संवन्धः । कीदृशात् स्वभावात्? 'उपलब्धृतः' उपलम्भकात् ज्ञातुः अनुभवितुः इत्यर्थः। कदा च न निवर्तते? 'जाग्रदादिविभेदे प्रसर्पति अपि' जाग्र-

द्यादिना यो 'विभेदो' व्यतिरेकः, अवस्थानाम् अन्योन्यवैलक्षण्यं, तस्मिन् 'प्रसर्पति' विजृम्भमाणे। आदिग्रहणात् स्वप्न-सुषुप्तावस्थे गृह्येते; स्मृत्याद्यवस्थाः स्वप्नेनैव संगृहीताः, तुल्यरूपत्वात्; मदमूर्छाद्यवस्थाश्च सुषुप्तेन। तत्र जाग्रत् इति जागरावस्थैव शास्त्रेषु प्रसिद्धा, यस्यां श्रोत्रादिभिः इन्द्रियैः शब्दादीन् इन्द्रियार्थान् गृह्णन् प्रसृतशक्तिः पुरुषः परिस्पन्दते। स्वप्नः स्वापावस्था, यस्यां स्वव्यापारपरिश्रान्तः श्रोत्रादिविहारविरतावपि मनसैव असौ विषयान् परिगृह्णाति। सुषुप्तं गाढनिद्रारूपा सुखस्वापावस्था, मनोव्यापारस्यापि व्युपरमे सति यत्र व्यतिरिक्तवेद्यसंवेदनं तात्कालिकं नास्ति। स्मृत्यवस्था अनुभूतविषयासंप्रमोषात्मिका स्वप्नसदृशी, मनसैव विषयग्रहणसाम्यात्। मदः पानातिशयजः चित्तेन्द्रियवृत्तिप्रमोषरूपो विकारः। मूर्छा विषादविषादिभोजनादिजनितमोहात्मा। एवमादिवेद्यग्रहणाभावसाम्यात् सुषु-

तुल्या अन्या अपि याः काश्चनापि अव-स्थाः संभवन्ति, ता एतासु एव अन्तर्भवन्ति। एतन्निमित्तके विभेदे प्रवर्तमानेऽपि, निजात् उपलब्धुः स्वभावात् असौ न निवर्तते। यदि अवस्थात्मक एव अयम् उपलब्धा स्यात्, तत् अवस्थावत् सोऽपि विभिद्येत। यावता तासां विभेदे प्रसर्पति, अयं स्वभावात् अ-वस्थाव्यतिरिक्तात् न निवर्तते,—इति अपिश-ब्दस्य अर्थः। कथम् एतत् प्रतिपद्यामहे,—यत् अवस्थातापि सन् अवस्थासु भिन्नरूपासु प्र-सरन्तीष्वपि स एकस्मात् स्वभावात् न नि-वर्तते इति? अत्र हेतुगर्भं विशेषणम् आह,— कीदृशि तस्मिन् प्रसर्पति? 'तदाभिन्ने' अ-भिन्न एकरूपो निर्विशेषोपलब्धृत्वमात्रेण लक्ष-णेन युक्तः स्वस्वभावो व्यापकत्वेन स्वयम् अनुभूयमानो यत्र स तथा तस्मिन्। अवस्था-भेदेऽपि उपलब्धृलक्षणस्य अवस्थातुः अभे-

पं० १७ ग० पु० लक्षणस्य अवस्थान्तरभेद इति पाठः।

दः,– इति सर्वस्य अत्र स्वानुभवः प्रमाणम्। तथाहि,–योऽहम् अस्वाप्सं स जागर्मि इति एकानुसंधातृसूत्रनिबद्धत्वेन स्वयम् अनुभूयमाना जागरादयोऽवस्थाः प्रसर्पन्ति। एताभ्यश्च अन्यदवस्थान्तरम् आनन्त्येऽपि संसारिणां जन्तूनां न संभवति। अतो यथा एकस्मिन् देहे अवस्थाव्यतिरिक्तरूप उपलब्धा व्यापक एकः, तथा सर्वदेहेष्वपि स एव एको व्यापकः सिद्धः; देहभेदेऽपि तस्य उपलब्धृमात्रव्यतिरिक्तलक्षणान्तराभावात्। प्रतिप्राणि पृथक्त्वेन अहमिति तु प्रत्ययो मायीयो, न तात्त्विकः। तद्व्युदासार्थमेव प्रकरणारम्भः। सोऽपि च उपलब्धृत्वमात्रम् एकं स्वलक्षणं न व्यभिचरत्येव।–इति स्वस्वभाव एव शंकर–इति सम्यक् उपपादितं स्वानुभवानपह्नविनः प्रबुद्धान् प्रति। एताभिरेव अवस्थाभिः योगशास्त्रप्रसिद्धास्वपि जागराद्यवस्थासु तस्य अभेदः प्रतिपादितो वेदितव्यः।

तास्वपि तस्य उपलब्धृत्वेन व्यापकतया अवस्थानात् । ताश्च संक्षेपतो लक्ष्यन्ते।—तत्र ध्येये अर्थे चेतसा झगिति प्रवृत्तिमात्रं जागरावस्था, धारणा इति क्वचित्प्रसिद्धा । तत्रैव विसदृशप्रत्ययपरिहारेण सजातीयप्रत्ययप्रवाहैकतानतानुसंधानं स्वप्नावस्था, ध्यानम् इति याम् आहुः। क्रमेण ऐकाग्र्यातिशयात् प्रत्ययान्तरासंकीर्णसूक्ष्मध्येयाभासमात्रविशेषता चित्तस्य सवेद्यसुषुप्तावस्था, यां वितर्कविचारानन्दास्मितानुरूपानुगमलक्षणस्य संप्रज्ञातस्य समाधेः आनन्दास्मितामात्रानुगतम् अवस्थाविशेषम् आचक्षते । यस्तु

'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः' (पा० १ सू० १७ पातञ्जले)

इति कृतलक्षणः असंप्रज्ञातः समाधिः, तत् अपवेद्यसुषुप्तम् । सर्वासु एतासु च अनुभवितृरूपस्य व्यापकस्य एकस्य स्वभावस्य सत्ता

---

पं० ७ ग० पु० एकाग्र्यातिशयाप्रत्ययेति पाठः ।

स्थितैव। यतः सालम्बने तावत् समाधौ व्यतिरिक्तवेद्यसद्भावात् लौकिकावस्थावत् वेदकस्य उपलब्धुः सत्त्वं स्फुटम् एव। यत्र तु निरालम्बनत्वात् अभावरूपत्वं तत्र तत्कालमेव वेद्यासंवेदनमात्रं, न तु वेदकस्य वेदकत्वाभावः सुषुप्तादिवत्; ततो निःसृतस्य सा अवस्था स्मर्तव्यतया वेद्यत्वम् आपन्ना व्यापकस्य सद्भावम् अभिव्यञ्जयत्येव। ये पुनः वेद्यसंवेदनसामर्थ्याभावमात्रव्यामोहिता उपलब्धारमात्मानमेव असत्यं मन्यन्ते तान् पुरस्तात् प्रतिबोधयिष्यति। एतत् सर्वं वृत्तिकृता

'जाग्रदादिनापि भेदे प्रवर्तमाने न तस्य स्वरूपमाव्रियते'

इत्यादिना ग्रन्थेन सूचयित्वा विषशक्तिदृष्टान्तेन प्रमाणीकृतम् ॥ ३ ॥

ननु जागरादिषु अवस्थाविशेषेषु स्वभावात् उपलब्धुः[५] असौ न निवर्तते, 'स्वस्य' आत्मन

---

५ उपलब्धृरूपात् इत्यर्थः।

---

पं० १० ख० ग० पु० असन्तमित्यपि पाठान्तरमस्ति।

उपलब्धुर्ज्ञानस्य 'भावात्' स्वानुभवरूपात् एकरूपतया अवस्थानात्,—इति यत् प्रतिपादितम् तत् कथम्? यतः तासु अवस्थासु अनुभवितुः एवंविधाः प्रत्ययाः प्रादुर्भवन्ति, तत् यथा,—मनुष्योऽहं, ब्राह्मणोऽहं, देवदत्तोऽहं, युवाहं, वृद्धोऽहं, कृशोऽहं, स्थूलोऽहम्,—इत्यादयो देहालम्बनाः; सुखितोऽहं, दुःखितोऽहम्,—इत्यादयो बुद्ध्यालम्बनाः; क्षुधितोऽहं, तृषितोऽहम्,—इत्यादयः प्राणालम्बनाः। शून्यताप्रमातृप्रत्ययश्च 'नाहं किंचित् अवेदिषम्,—इति प्रत्यवमर्शप्रत्ययः सुषुप्ताद्यवस्थातः प्रतिबुद्धस्य शून्यालम्बनः प्रादुर्भवति। त एते देहादयः सर्व एव अनित्याः, तदालम्बनश्च अहंप्रत्ययोऽपि अनित्य एव।—इति कथमुक्तम् [६] उपलब्धुः स्वभावात् असौ न निवर्तते?—इत्यत आह

---

६ उपलब्धृताविषयस्य इत्यर्थः।

अहं सुखी च दुःखी च रक्तश्चेत्यादिसंविदः।
सुखाद्यवस्थानुस्यूते वर्तन्तेऽन्यत्र ताः स्फुटम् ॥ ४ ॥

'अहं सुखी इत्यादयो याः संविदः ता अन्यत्र वर्तन्ते' ततः असौ स्वभावात् एकस्मात् न निवर्तते, —इति संबन्धः । अन्तरङ्गत्वात् मुख्या बुद्ध्यालम्बनाः संविदोऽत्र निर्दिष्टाः । आदिग्रहणात् तु देहाद्यालम्बनाः संगृहीताः । ताश्च पूर्वं प्रतिपादिताः । तेन सर्वा एताः संविदः अन्यत्र यथाप्रतिपादिताभ्यः सुखादिभ्यः अवस्थाभ्यो व्यतिरिक्ते सुखाद्युपलब्धरि वर्तन्ते, सरितः सागरे इव तत्र विगलितान्योन्यभेदा ऐक्येन अवतिष्ठन्ते, तादात्म्यम् आपद्यन्ते इत्यर्थः । एतत् च 'स्फुटं' स्वानुभवसंवेद्यत्वात् सुप्रकटमेव । अतश्च एकैव संवित् उपलब्धृरूपा अहमिति स्फुरन्ती पारमार्थिकी, मायाशक्तिजनिततथाविधस्वभावपरामर्शाभावबलात् सुखाद्यानित्य-

वस्तुवेदकत्वेन 'अहं सुखी दुःखी च'—इत्यादिना बुद्ध्याद्यवस्थासामानाधिकरण्यम् उपगता सती, संविद इति बहुवचनेन निर्दिष्टा। यदि पुनः सुखादिवेद्यवस्तुसंबन्धात् सुखादिवत् संविदोऽपि अहं प्रत्ययरूपाः परमार्थत एव बह्व्यः स्युः, तदा स्मृतिप्रत्यभिज्ञाद्यनुसंधानं न स्यात्; असति च तस्मिन् सर्वव्यवहारोच्छेदः प्रसक्तः; स च नेष्टः; ततः 'अन्यत्र' इति निर्दिष्टस्य अर्थस्य विशेषणम् आह,—एताः संविदः कीदृशि अन्यत्र वर्तन्ते? 'सुखाद्यवस्थानुस्यूते' सर्वेषु सुखादिषु सुखदुःखमोहरूपेषु अवस्थाविशेषेषु, उत्पादविनाशधर्मकत्वात् अनित्येषु, वेद्यत्वसामान्यात् शब्दादिविषयसमानवृत्तिषु अहमिति उपलब्धात्मकेन एकेन रूपेण व्यापकतया स्थिते। यतः अहं सुखी दुःखी च इत्येवमादिषु प्रत्ययेषु उल्लसत्सु द्वौ अर्थौ स्फुरतः। एकः सुखाद्यात्मा

वेद्यरूपः,—स वेद्यत्वादेव घटादिवत् अनित्यत्वेन नानात्वेन च प्रतिपद्यते; अहमिति अपरो वेदकरूपः,—स च पूर्वापरावस्थाव्यापकत्वेन समस्तप्रमातृप्रसिद्धः, सकलव्यवहारहेतोः अनुसंधानस्य कर्ता, नित्य उपलब्धृमात्ररूपत्वात् एक एव प्रकाशते । तत् एवम्,—यथा जाग्रदादिना हेतुना विभेदे प्रसर्पत्यपि अयम् अभिन्नस्वलक्षण एक एव, तथा ज[redacted]स्थान्तर्गतसुखित्वादिप्रत्ययसंतानेन हेतुना विभेदे प्रवर्तमानेऽपि अभिन्नस्वलक्षण एक एव; यतः इहापि योऽहं सुखी जातः, स इदानीं दुःखी रक्तो वा स्थित—इति एकानुसंधातृनिबद्धा एव अवस्थाः प्रतीयन्ते । तस्मात् अनन्तजन्तुसंतानवर्तिभिः अशेषैः अवस्थाविशेषैः ईषदपि अनुपजानितोपलब्धृमात्रस्वभावान्यथाभावः, स्वयंसिद्धो, नित्यनिरावरण-

पं० ३ क० ख० पु० पूर्वापरव्यवस्थेति पाठः

रूपत्वात् सर्वत्र अनिरुद्धः, तात्त्विकः स्वस्वभाव एव शंकर इति। तत् एतत्

'स च अनुस्यूत एव सर्वासु अवस्थासु'

इत्यादिना व्याख्याय

' ...... .................... स स्वभावः परः स्मृतः॥'

इति सिद्धान्तीकृतं वृत्तिकृता॥ ४॥

एवं स्वस्वभावस्य शिवत्वेन व्यपदेशो युक्त इति उपपाद्य, इदानीं तस्य संग्रहेण लक्षणम् अनुवदन् परमार्थसत्तां प्रतिपादयितुम् आह

**न दुःखं न सुखं यत्र न ग्राह्यं ग्राहको न च।**
**न चास्ति मूढभावोऽपि तदस्ति परमार्थतः**
**॥ ५॥**

'तत्' वक्ष्यमाणविशेषणं वस्तु स्वस्वभावशब्दवाच्यं 'परमार्थत' ः तत्त्वतः अस्ति, तद्व्यतिरिक्तं सर्वम् असत्यसद्भावम् इत्यर्थः। किं तत्? 'यत्र न दुःखं, न सुखं, न च ग्राह्यं, न ग्राहको, न मूढभावोऽपि अस्ति।अनेन सुखादिरूपताप्रतिषेधेन वेद्यत्वम् अस्य प्रतिषिध्यते। द्वि-

विधं हि वेद्यम्,—बाह्यम् आभ्यन्तरं च। तत्र आभ्यन्तरं सुखादि अन्तःकरणवेद्यत्वात्; तत् यत्र नास्ति, प्रतिपादिताविविक्तवेदकैकस्वभावत्वात् तस्य। बाह्यं तु शब्दादि वेद्यं, तत् ग्राह्यशब्देन निर्दिष्टं, श्रोत्रादिबाह्येन्द्रियगृहीतं हि तत् अन्तःकरणेन सुखाद्यात्मकं वेद्यते; तदपि यत्र नास्ति। न हि तस्य रूपं शब्दादिविषयात्मकत्वेन ग्राह्यताम् आपद्यते। ग्राहकोऽपि मायीयः प्रमाता अत्र विवक्षितः, न तु तात्त्विक उपलब्धृमात्रस्वरूपः, तस्य एवं नित्यसत्त्वेन प्रतिपाद्यमानत्वात्। एवं मायीयो देहाद्यहंकारमयो ग्राहकोऽपि यत्र नास्ति। ग्राहकमिति तु पाठे, ग्राहकम् इन्द्रियम् इति व्याचक्षते; तदपि यत्र नास्ति। एवं ग्राह्यग्रहणस्वरूपव्यतिरिक्तं ग्रहीतृमात्रस्वभावं यत् तत्त्वं तत् अस्ति इति।

ननु च एवं सति, मूढावस्थैव असौ—

---

पं० १४ क० ख० पु० ग्रहणस्वभावेति पाठः।

इति प्रतिपादितं भवति, तस्यां हि सुखादिरूपताभावः। एतत् निराकर्तुम् आह,—'न चास्ति मूढभावोऽपि' इति,—मूढस्य भावो मूढत्वं वेद्यवेदनसामर्थ्याभावः; सोऽपि यत्र नास्ति न विद्यते; यतः तस्यापि अवस्थान्तरे मूढोऽहमासम्—इति प्रत्यवमृश्यमानत्वात् वेद्यत्वं स्थितमेव, केवलं तत्कालमनुपलम्भः। वेद्यत्वसद्भावे च मूढावस्थायाः कथं वेदकैकस्वभाववस्तुरूपत्वं स्यात्? यद्येवं मूढभावोऽपि तत्र नास्ति, तत्प्रतिपत्तिगोचरसमस्तवेद्यवस्तुरूपताप्रतिषेधात् अभावमात्रं तत्,—इति प्रतिपादितं स्यात्। तत्प्रतिक्षेपार्थम् आह,—'तदस्ति परमार्थतः' इति;—यत् एवंविशिष्टतया व्याख्यातं, तत् वस्तु परमार्थतः अस्ति, सततम् अविलुप्तोपलब्धृमात्रलक्षणस्वभावत्वात्। यत् पुनः सुखादि, तत् कल्पनामात्रलब्धात्मकं क्षणभङ्गुरं सर्वदा वेद्यमेव, वेदकैकस्वभावात् आत्म

पं० १७ ग० पु० स्वभावत्वात् इति पाठः।

नो दूरभिन्नम्। अतो यत् यत् वेद्यभूमिकायां वर्त्तते, तत् सर्वम् असत्, अनित्यत्वात्। यस्तु वेदकः, स एक एव परमार्थसन् इत्यर्थः। तत् इदं

'तस्य चायं स्वभाव'

इत्यादिना ग्रन्थेन वृत्तिकृता व्याख्यातम् ॥ ५॥

इदानीं अस्य परमार्थसत आत्मन एव शिवस्य समस्तवस्तुसंपादनस्वतन्त्रशक्तित्वप्रतिपादनपूर्वम् उपादेयतमत्वम् उपदेष्टुं युगलकमाह

यतः करणवर्गोऽयं विमूढोऽमूढवत्स्वयम्।
सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः॥
लभते तत्प्रयत्नेन परीक्ष्यं तत्त्वमादरात्।
यतः स्वतन्त्रता तस्य सर्वत्रेयमकृत्रिमा
॥ ६॥॥ ७॥

'तत् तत्त्वं' स्वस्वभावाख्यं वस्तु परमार्थसत्त्वेन अवस्थितं 'प्रयत्नेन' प्रकृष्टेन यत्नेन सततम् अविलुप्तेन उद्योगेन, 'आदरात्' श्रद्धाति-

शयात् 'परीक्ष्यं' सर्वासु अनुभवदशासु वक्ष्यमाणोपदेशानुसारेण क्रमेण, वेद्यवेदकलक्षणराशिद्वयविभजनपरतया, वेदकस्वरूपपरामर्शात् आत्मत्वेन स्फुटीकार्यम्। 'यतः तस्य इयम्' अधुनैव प्रस्तुतव्याख्याना 'स्वतन्त्रता' स्वेच्छामात्राधीनसकलकार्यकर्तृत्वरूपा 'सर्वत्र' सर्वस्मिन् देहे दशाविशेषे वा अवस्थितस्यापि 'अकृत्रिमा' सहजैव, न तु उपादानसहकार्यादिकारणान्तरापेक्षिणी,—यतः संसारिणामपि तत्स्वातन्त्र्यमहिम्नैव समस्तव्यवहारसंपत्तिः; मायाव्यामोहवशात् तु सत्यस्वभावपरामर्शाभावात् सर्वः संसारी परतन्त्र इव व्यवहरति सर्वक्रियासु व्यतिरिक्तकारणापेक्षसर्वार्थसिद्धिकत्वात्,—तस्मात् स्वाभाविकस्वातन्त्र्यप्राप्तये तत् तत्त्वं परीक्ष्यम्, न तु सुखदुःखमोहग्राह्यग्राहकरूपप्रतिषेधात् तत् अवस्तुभूतम् अवगन्तव्यम् इति उपदिष्टम्। इ-

पं०११ क० ग० पु० मायाव्यपोहेति पाठः

दानीम् 'इयम्' इति निर्दिष्टां स्वतन्त्रतां प्रति-
पादयितुं यच्छब्दविशिष्टं विशेषणं व्याख्याय-
ते।—किं तत् तत्त्वं परीक्ष्यं? 'यतो' यस्मात् 'अ-
यं करणवर्गः' करणानां श्रोत्रादीनां बाह्यानां,
मनःप्रभृतीनाम् आभ्यन्तराणाम् इन्द्रियाणां
वर्गः त्रयोदशकरणसमूहः 'प्रवृत्तिस्थितिसंहृ-
तीः लभते' 'प्रवृत्तिः' जिघृक्षितार्थोन्मुखतास-
मुन्मिषदवस्था, 'स्थितिः' गृहीतार्थविश्रान्त्यव-
स्था, 'संहृतिः' कृतकृत्यत्वात् बाह्यार्थपरित्यागे
स्वव्यापारोपरमः प्रत्यस्तमयावस्था, एताः 'ल-
भते' प्राप्नोति। कीदृशः करणवर्गः? 'विमूढः'
प्रायशो जडतया प्रसिद्धः। कथं लभते? 'अमू-
ढवत्' चेतनवत्। एतत् उक्तं भवति—प्राकृ-
तं जडमपि एतत् बाह्याभ्यन्तरम् इन्द्रियचक्रं
प्रवृत्त्यादिचेतनव्यापारसमर्थं यत्संस्पर्शबलात्
भवति, तत् तत्त्वम् आत्मबलेन स्फुटीकृतं स-
त् इन्द्रियचैतन्यापादनस्वातन्त्र्यवत् सर्वविषय-

---

पं० २ ग० पु० विशेषणं यद्याख्यायते इति पाठः।

स्वातन्त्र्यलाभाय कल्पते एव; अतः परीक्ष्यं, येन अभ्यासदशायामेव अभिव्यज्यमाने स्वातन्त्र्ये परशरीरावेशादिक्रीडा उपपद्यते। तत् इदम्

'न च सुखादिरूपो यदा नासौ'

इत्यादिना

'तस्मात्तत्त्वं यत्नेन परीक्षितव्यम्

इत्यादिना च पृथक् व्याख्यातं वृत्तौ ॥ ७ ॥

ननु किमिदम् उच्यते, — तत् किंचित् तत्त्वं परीक्ष्यं यद्वशात् इन्द्रियाणि चेतनीभवन्तीति, किल एवं व्यवहारो व्यवस्थितः, — सर्वः कश्चित् चेतनः प्रमाता धर्माधर्मसंबन्धात् इच्छाख्येन गुणेन संयुज्यमानो हेये उपादेये वा विषयभूते प्रयत्नवान् भूत्वा, तेनैव इच्छाख्येन गुणेन करणवर्गं जडमेव तत्तद्विषयहानोपादानादौ प्रेरयति; स च तत्प्रेरितो जड एव दात्रादिवत् स्वकार्यं करोति। तत् कथमुक्तम्; — यतः कारणभूतात् अमूढवर्

प्रवृत्त्यादि लभते इति; व्याख्यातं च,—यत्सं-स्पर्शबलात् एव हेतोः प्रवृत्त्यादिचेतनव्यापा-रसंपादनसमर्थो भवति?—इत्याशङ्क्य यथा एष करणवर्गः चेतनीभवति तथा संसारि-पुरुषस्य व्यवहारप्रदर्शनेन स्फुटीकर्तुमाह

नहीच्छानोदनस्यायं प्रेरकत्वेन वर्तते ।
अपि त्वात्मबलस्पर्शात्पुरुषस्तत्समो भवे-त् ॥ ८ ॥

'नहि' न खलु 'इच्छानोदनस्य' इच्छैव नो-दनं, नुद्यते अनेन इति प्रतोदादि करणं, तस्य 'प्रेरकत्वेन' इन्द्रियवर्गं प्रति चोदकत्वेन असौ पुरुषः संसारी प्रमाता 'वर्तते' अवतिष्ठते । य-था कश्चित् देवदत्तादिः केनचित् करणभूतेन हस्तादिना जडं प्रतोदादि प्रेरयति, न एवम् 'अ-यम्' आन्तरः 'पुरुषः' इच्छया जडं करणवर्गं स्व-विषये प्रवर्तयति;, 'अपि तु आत्मबलस्पर्शात्' आत्मनः परस्य प्रमातुः सर्वकर्तुः ईश्वरस्यैव

पं० ४ ग० पु० संसारिपुरुषव्यवहारेति समस्तः पाठः।

स्वभावस्यैव यत् बलं सामर्थ्यं कारणान्तरनैरपेक्ष्येण अखिलवस्तुसंपादनशक्तता, तत्स्पर्शात् तत्संपर्कात् 'तत्समो भवेत्' तेन आत्मशब्दोक्तेन परेण कर्त्रा तुल्यः संपद्यते। इदमत्र तात्पर्यम्,—यत्रैव स्वस्वभावे स्थित्वा आत्मशब्दप्रतिपादितः परमेश्वरो जगदिदं प्रवृत्तिस्थितिसंहृतीः यथेष्टं लम्भयितुं स्वतन्त्रः, तत्रैव स्थित्वा पुरुषोऽपि अयं संसारी करणवर्गं स्वविषये प्रवृत्त्यादि लम्भयितुं स्वतन्त्रः, तेन तत्समो भवेत् इति उक्तम्। ततो यथा ईश्वरः सर्वव्यापिकाभ्यां ज्ञानक्रियाख्याभ्यां शक्तिभ्यां, विश्वं प्रवृत्त्यादि प्रापयन् सर्वं जानाति च करोति च, तथा पुरुषः तद्बलस्पर्शादेव उपजातज्ञत्वकर्तृत्वसामर्थ्यो मायावशात् नियतविषयाभ्यां ज्ञानक्रियाशक्तिभ्यां अन्तर्बहीरूपकरणवर्गतया प्रसृताभ्यां स्वविषयं जानाति च करोति च,—इति तत्साम्यम् अस्य उक्तम्

'न च इच्छाप्रेरणेन करणानि प्रेरयति'

---

प० १८ ख०ग० पु० इच्छाप्रेषणेन करणानि प्रेषयतीत्यपि पाठान्तरमास्ति।

काले 'क्षोभः' प्रतिनियतशरीराद्यालम्बना।ऽहंप्र-
त्ययात्मा मायीय उपप्लवः 'प्रलीयेत' कृत्रिमाल-
म्बनोत्तीर्णस्वाभाविकाहंप्रत्ययप्रभाकरप्रकाशसं-
पर्कात् प्रालेयपटलवत् विगलेत् विनश्येत्; 'तदा
परमं' निरुत्तरं 'पदं' स्थानं 'स्यात्' सद्भावेन
प्रकाशेत—अभेदः आत्मपुरुषशब्दप्रतिपादित-
योः परापरयोः संविदोः तस्यामेव दशायाम् उ-
पलभ्यतया प्रथेत इत्यर्थः। तदेतत्—स्वस्वभावे
प्रतिष्ठानम् इदम् [इति] अनेन श्लोकेन प्रतिपा-
दितम्। उपपाद्यतां नाम दर्शनान्तरेषु तैस्तैः
प्रकारैः अशुद्धिः अस्य पुंसः; इह तु एताव-
त्येव असौ,—यत् अचित्स्वरूपेषु अनित्येषु प-
रतन्त्रेषु देहादिषु तद्विलक्षणार्थनिष्ठतया उ-
पपन्नः अहंप्रत्ययः प्रवर्तते; तावन्मात्रनिबन्ध-
ना हि सर्वाः संसारित्वप्रतिपत्तयः; तस्मिन्ने-
व विगलिते स्वस्वभावाभिव्यक्तिलक्षणा परा

---

पं० ८ ग० पु० उपलब्धतया इति पाठः।

पं० ९ ग० पु० अर्थसंगतिसौकर्याय 'इति' शब्दोऽत्र प्रक्षिप्तः।

शुद्धिरिति । यदुक्तम्

'जाते देहप्रत्ययद्वीपभङ्गे
प्राप्तैकध्ये निर्मले बोधसिन्धौ ।
अव्यावर्त्यैवेन्द्रियग्राममन्त-
र्विश्वात्मा त्वं नित्यमेकोऽवभासि ॥'

तथा

'नात्माधीनत्वेऽपि विश्वं नियोक्तुं
सर्वो हस्तादीनिवेष्टे यथेष्टम् ।
बालो राजेवात्मशक्त्यप्रबोधात्
त्वय्यन्तःस्थे सर्वशक्तिस्तु सर्वः ॥'

इति । तदेतत् तावत्

'स चास्य'

इत्यादिना वृत्तौ व्याख्यातम् ॥ ६ ॥

ननु प्रलीनदेहाद्यहंप्रत्ययलक्षणक्षोभो नि-वातनिश्चलजलधिवत् सुप्रशान्तस्थितिः आत्मैव परमपदशब्दप्रतिपादितः; तत् कथं तद्बलस्पर्शात् पुरुषः तद्विलक्षणं क्षोभात्मकमेव धर्मम् आसादयेत्, येन युक्त इन्द्रियवर्गं प्रवृत्त्यादि लम्भयन्, अहं करोमि, अहं जानामि,

इति स्वविषयं प्रतिपद्यमानः क्षुभित एव भवति ?—इति अनात्मज्ञानां मातिविभ्रमभङ्गायाह

तदास्याकृत्रिमो धर्मो ज्ञत्वकर्तृत्वलक्षणः ।
यतस्तदेप्सितं सर्वं जानाति च करोति च ॥ १० ॥

'तदा' तस्मिन् यथोक्तक्षोभपरिक्षयोपलक्षिते काले, आत्मनः 'अस्य अकृत्रिमः' सहजसिद्धः सततमव्यतिरिक्तो 'ज्ञत्वकर्तृत्वलक्षणो धर्मः' गुणोऽस्त्येवेति शेषः; 'यतो' यस्मात् अव्यभिचारिणो गुणात् कारणभूतात् 'सर्वम्' अखिलम् 'ईप्सितं' ज्ञेयतया कार्यतया। अवाप्तुमिष्टं वस्तु, स पुरुषः 'तदा' तस्यां दशायां सत्यस्वभावसंबन्धलक्षणयोगात्मिकायां, न तु अन्यदा—देहाद्यालम्बनाहंप्रतीतिसारसंसारिपुरुषदशायां 'जानाति च करोति च'। किम् उक्तं भवति ?—ज्ञत्वमुपलब्धृत्वं नाम अस्यात्मनोऽव्यतिरिक्तो गुणः; स च इदन्ताव-

सेयस्य वस्तुनो ज्ञेयतया कार्यतया च द्वैविध्यात् द्वित्वेन उपचर्यते । वस्तुत एकैव ईश्वरस्य स्वभावप्रत्यवमर्शरूपा शक्तिः; सा संवेदनरूपत्वात् ज्ञानशब्देन उच्यते, तावन्मात्रसंरम्भरूपत्वात् क्रियाशब्देन च उद्घोष्यते । स च एवंविधो धर्मः अस्य वेद्यत्वप्रतीत्युपप्लवासंस्पृष्टे वेदकैकलक्षणे स्वभावे स्थितस्य सर्वज्ञतया सर्वकर्तृतया च विजृम्भते। यत् पुनः तादृक्स्वभावप्रत्यवमर्शाभावात् वेद्य एव देहादौ वेदकप्रत्ययनिबन्धनं ज्ञत्वं कर्तृत्वं च, तत् कृत्रिमं परिमितविषयं च । तस्मात् आत्मनो ज्ञत्वकर्तृत्वलक्षणाव्यतिरिक्तधर्मता स्वभाव एव, न तु क्षोभावस्था । तादृशं च आत्मबलं स्पृशन् संसारिपुरुषः करणवर्गप्रवर्तनादिना स्वविषये ज्ञत्वकर्तृत्वाभ्यां युज्यमानस्तत्सम्। भवेत् — इति यत् उक्तं तदेव उपपन्नम्। तदेतत्

'यतस्तस्मिन्प्रलीनक्षोभात्मके काले'

इत्यादिना वृत्तिकृत् व्याचष्ट ॥ १० ॥

इत्थम् आत्मस्वरूपम् उपपद्य । व्यवस्थाप्य तत्प्रतिपत्तिफलं प्रदर्शयितुम् आह

**तमधिष्ठातृभावेन स्वभावमवलोकयन् ।**
**स्मयमान इवास्ते यस्तस्येयं कुसृतिः कुतः ॥ ११ ॥**

'तम्' इति सर्वनाम्ना श्लोकदशकप्रतिपादितमात्मतत्त्वं प्रत्यवमृश्यते । 'तम्' एवंलक्षणं 'स्वभावम्' आत्मानम् 'अधिष्ठातृभावेन' सर्वशरीरेषु सर्वावस्थासु सर्वदा सर्वत्र अनुभवितृमात्रेण सर्वम् आक्रम्य अवस्थितत्वात् अनन्याधिष्ठेयः अहमेव एकः स्वतन्त्रः परमेश्वरः अधिष्ठाता इत्येवंरूपतया 'अवलोकन्' उक्तया उपपत्तिदृशा वक्ष्यमाणया च उपलब्ध्युपदेशदृशा पश्यन् प्रत्यभिजानन् 'स्मयमान इव' विस्मृतपरप्रमातृरूपात्मतत्त्वप्रत्यभिज्ञानात् मायीयप्रमातृस्वरूपम् असत्यमपि इत्थं प्रथमानं विमृशन् विस्मयमिव आपन्नो 'य आस्ते' निर्विघ्नां स्थितिम् अनुभवति, 'तस्य' एवंलक्ष-

णस्य योगिनः 'इयं' सुप्रसिद्धा देहाद्यहंप्रतीति-मात्रमूली 'कुसृतिः' जन्मजरामरणादिद्वन्द्वयोगात् कुत्सिता गर्हिता सृतिः सरणं नानायोन्यन्तरभ्रमणं 'कुतः' ?—प्रतिपादितत्तत्वरूपाया अशुद्धेः हेतुभूताया अभावात् असीनस्य गतिरिव नास्त्येव इत्यर्थः । वृत्तिकृता च

'एवं यतः सर्वानुस्यूत एव अयमात्मा'

इत्यादिना व्याख्यातमेतत् ॥ ११ ॥

इदानीं समस्तवेद्यधर्मविरहितस्वरूपस्यात्मतत्त्वस्योपादेयतया प्रतिपादनादभाव एव प्राप्यतयोपदिष्टो भवति— इति मन्यमानान् प्रतिबोधयितुमाह

**नाभावो भाव्यतामेति न च तत्रास्त्यमूढता।**
**यतोऽभियोगसंस्पर्शात्तदासीदिति निश्चयः ॥ १२ ॥**

'अभावो' वस्तुशून्यता 'भाव्यतां' भावनीयत्वं समाधावालम्बनभावं 'नैति' न गच्छति, अभावभावभावनयोः परस्परविरोधात्; भावो

हि संविद्विषयतायोग्यः पदार्थो, ध्येयतया आ-लम्बनीभवितुमर्हति, न पुनः न किंचित्। यथा क्वचित् उपादिष्टम्

'अभावं भावयेत्तावद्यावत्तन्मयतां व्रजेत्॥'

इति। भवतु वासौ ध्यातृ-ध्यान-ध्येयविकल्पोच्छेदरूपा समाध्यवस्था, याममभाव इति मन्यन्ते विस्मृतात्मानः। न च 'तत्र' तस्मिन्नवस्थाविशेषे 'अमूढता' मूढत्वाभावो विद्यते, 'यतोऽभियोगसंस्पर्शात्' व्युत्थानावसरे तादृग्दशान्तरानुसंधानविषयेणाभियोगेन तत्कालप्रत्युदितेनाभिलापेन संस्पर्शात् संपर्कात् 'तत्' दशान्तरम् 'आसीत्' अभूदतीतम् 'इति निश्चयः' अध्यवसायः स्यात्। किम् उक्तं भवति?– अभावसमाधिलब्धप्रतिष्ठो योगी ततो व्युत्थितः सन् यदि तामवस्थां नानुसंदध्यात् तत् कथं लब्धप्रतिष्ठोऽस्मि–इति प्रत्ययोऽस्य स्यात्? असति च तस्मिन् समा-

---

प० १४ क० ख० पु० ततोऽभ्युत्थितः सन् इति पाठः।
पं० १५ क० ख० पु० यदा ताम् इति पाठः।

धिव्युत्थानयोः व्यतिरेकाग्रहणाम् । तस्मात् तदानीं तादृशीं दशाम् अहम् अन्वभवम्— इति अवश्यं स्मर्यते । तच्च अतीतत्वेन स्मर्यमाणत्वादेव अनित्यं सुखादिवत् आत्मनः स्वरूपं न भवति; तस्य चिद्रूपस्य अनुभवितृत्वेन सर्वदा वर्तमानत्वात् स्मर्त्रन्तरेण स्मर्यमाणत्वं न संभवति । व्याख्यातम् एतत् वृत्तौ

'न स्वभावो भावनीयः,

इत्यादिना ॥ १२ ॥

तत् स्फुटीकर्तुम् आह

**अतस्तत्कृत्रिमं ज्ञेयं सौषुप्तपदवत्सदा ।**
**न त्वेवं स्मर्यमाणत्वं तत्तत्त्वं प्रतिपद्यते ॥ १३ ॥**

'अत' आसीत् तत् इति भूतत्वेन अभियुज्यमानत्वात् 'तत्' अभावसमाधिसंज्ञितं वस्तु 'कृत्रिमं ज्ञेयं' भावाभावदशायोगित्वात् कल्पना-

---

पं० २ ग० पु० दृशामवहम् इति पाठः ।

कृतम् अनित्यं बोद्धव्यं 'सदा' न क्वाचिद-सौ कालकला विद्यते, यस्यां सा तादृशी समाध्यवस्था नित्यत्वेन अवतिष्ठते । कथं कृत्रिमं ज्ञेयं ?—'सौषुप्तपद्वत्' सुषुप्तमेव सौषुप्तं सुखस्वापावस्था तदेव पदं संविदाधिकरणं तेन तुल्यम् । किमुक्तं भवति?—यथा लौकिकी सुषुप्तावस्था निविडमोहात्मकत्वात् सतोऽपि वेद्यवेदकविभागस्य तत्कालम् अग्रहणे साति अभावरूपा इव सती प्रबोधकालप्रत्युदितानुसंधानविषयताम् आपाद्यमाना अतीतत्वेन स्मर्यमाणत्वात् अनित्या, तद्वत् अभावसमाध्यवस्थापि अनित्या व्युत्थानकाले भूतत्वेन स्मर्यमाणत्वसाम्यात् । एतेन सर्वे एवंप्रायाः समाधयः सुषुप्तावस्थायामेव अन्तर्भवन्ति—इति प्रतिपादितम् 'न तु' पुनः 'तत् तत्त्वम्' इह उपादेयतमतया उपदिष्टं स्वस्वभावलक्षणं वस्तु 'एवम्' अनेन उक्तप्रकारेण 'स्मर्यमाणत्वं प्रतिपद्यते' तस्य हि नि-

त्योदितत्वात् सदा वर्तमानत्वमेव । तदेतत्

'अतोऽभावभावनया समाधिलब्धभूमिकस्यापि'

इत्यादिना वृत्तौ विवृतम् ॥ १३ ॥

अथैवं नित्योदितत्वात् सदा प्रकाशमानमपि तत् तत्त्वम् अप्रत्यभिज्ञायमानत्वात् बन्धहेतुः ; अतो लब्धोपदेशेन सर्वावस्थासु वेद्यवेदकरूपतत्त्वद्वयसंगृहीतविश्वप्रपञ्चविभजनपरतया वेदकांशम् अहमिति सर्ववेद्यस्वरूपोत्तीर्णमेव प्रत्यवमृशताम् आत्मीकार्यम् ।—इति उपदेष्टुं तस्य तत्त्वस्य स्वमायावैभवोद्भासितं द्वैरूप्यं प्रतिपादयितुमाह

**अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।**
**कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम्**
**॥ १४ ॥**

'अत्र' अस्मिन् इह प्रतिपादिते आत्माख्ये परस्मिन् तत्त्वे 'अवस्थायुगलं' द्वे अवस्थे सं-

---

पं० २ अभावभावनालब्धभूमिकस्यापि कृत्रिमा, इत्येवंविध एव पाठः मूलवृत्तिपुस्तकेऽस्ति ।

भवतः । अनेन विविधदर्शनप्रसिद्धप्रबन्धव्यवस्थापिततत्त्वादिभेदात् अपर्यन्तमपि हेयोपादेयरूपं वस्तु लक्षणद्वययोगात् द्वित्वेनैव संगृह्य प्रतिपादितम् ; आनन्त्येऽपि विश्ववैचित्र्यस्य द्वे एव तत्त्वे इत्यर्थः । एक एव तु परमार्थसन् परमेश्वर आत्मा निरुपम-निष्प्रतीघात-निरुपादाननिजैश्वर्यशक्तिबलाद् द्वित्वेन आत्मानम् अवभासयन् क्रीडति- इति प्रतिपादयितुम् अवस्थाशब्देन निर्देशः कृतः, एकमेव तत् तत्त्वं द्वित्वेन अवतिष्ठते इत्यर्थः । कीदृशम् अवस्थायुगलं? 'कार्यकर्तृत्वशब्दितं' कर्तृत्वेन भोक्तृत्वेन वेदकत्वेन चेतनभावेन अहम् इति एका अवस्था स्वतन्त्रा, द्वितीया तु तद्विपरीता कार्यरूपा भोग्या वेद्या जडा परतन्त्रा ताभ्यां 'शब्दितं' कथितम् । शब्दितशब्देन अनयोः संज्ञामात्रभेदो, न वास्तवः-इति प्रतिपादितम् । ततः कार्यरूपा

---

पं० ७ निरुपादानेति वाक्यं ख- ग- पु० नास्ति ।

या इयम् अवस्था सा प्रकाशमानत्वमात्रलब्धात्मकत्वात् आत्मनः परमकारणात् कर्तृशब्देन व्यपदिष्टात् प्रकाशैकस्वभावात् न भिद्यते, यतः शक्तिचक्रात्मकस्य स्वविभवस्य प्रभवत्वेन एतत् तत्त्वं प्रागेव प्रतिपादितम् । तत्र तस्मिन् इत्थंभूते अवस्थायुगले 'कार्यता क्षयिणी' कार्यरूपावस्था क्षणभङ्गिनी, यत् यत् इदं मुकुलिततत्त्वपरामर्शतया कार्यरूपत्वेनैव अवसीयते, तत् सर्वम् उदयव्ययसंबन्धात् प्रतिक्षणविनश्वरम् 'कर्तृत्वं पुनरक्षयं' कर्तृरूपावस्था नित्या नित्योदितसर्वावस्थाव्यापकत्वोपलब्धृत्वमात्रधर्मकत्वात् अविनाशि । तदेवम् एकमेव कर्तारं ज्ञातारं सर्वाधिष्ठातारं सततम् आत्मत्वेन अनुसंदधानो यस्तिष्ठति तस्य बन्धानुपपत्तिः—इति पूर्वश्लोकेन संबन्धः । तदेतत्

'अवस्थाद्वयमेव'

इत्यादिना वृत्तौ व्याख्यातम् ॥ १४ ॥

ननु यत् उपलब्धृरूपं तत्त्वं तत् अ-क्षयमित्युक्तं; तच्च नोपपद्यत एव; अभावसमाध्यवस्थासु उपलभ्यस्वरूपाभावात्; कथं तस्याक्ष· त्वम् ?— इत्याक्षेपे प्राक्प्रतिज्ञातं समाधानमाह

**कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते।**
**तस्मिंल्लुप्ते विलुप्तोऽस्मीत्यबुधः प्रतिपद्यते ॥ १५ ॥**

'कार्ये' निर्मेये वेद्ये वा वस्तुनि 'उन्मुखः' तस्य तथासंपादने प्रवणो 'यः प्रयत्नः' कर्तृत्वं [त्वे] सहज उत्साहः 'स केवलं' स एव परं कारणं व्यापारहेतुः, तस्यां दशायां कार्यस्य स्थूलरूपस्य अभावात् 'लुप्यते' अनभिव्यक्ततया आत्मन्येव न्यग्भूयेव अवतिष्ठते । 'तस्मिन्' प्रयत्ने तत्कालमेव 'लुप्ते' सति 'अबुधः' तत्त्वावबोधशून्यो 'विलुप्तोऽस्मि—इति प्रतिपद्यते' नाहमस्मीति भावाविलक्षणतया वस्तु परिच्छिन्दत एवंविधः प्रत्यय उपपन्नः

परिच्छिन्नत्ति चेत् कर्तृत्वेन प्रथमतरं सन्ने-
व असौ सिद्धः कथं निषेधस्य विषयः
स्यात्? तत् इदम् आयातम्,-यथा कश्चित्
देवदत्तो गृहाद्यवस्थितः केनापि आहूतो-भो
देवदत्त?-इति, स आत्मानम् अपह्नोतुका-
मः प्रत्याह,-नाहमस्मीति; एवमुक्ते प्र-
त्युत स्थितोऽहमस्मि -इति प्रतिपादितं
भवति, न त्वसंनिधानम् । तस्मात् अभा-
वसमाध्यवस्थासु कार्याभावात् करणव्यापार-
विरतिमात्रेणात्माभावप्रत्ययो भ्रान्तिरेवेति ।
व्याख्यातमेतत् वृत्तौ

'कार्यसंपादनसामर्थ्यम्'

इत्यादिना ॥ १५ ॥

एनमेवार्थं विशेषयितुम् आह ।

**न तु योऽन्तर्मुखो भावः सर्वज्ञत्वगुणास्पदम् ।**
**तस्य लोपः कदाचित्स्यादन्यस्यानुपलम्भ-**
**नात् ॥ १६ ॥**

'न तु' पुनः 'तस्य' परमार्थसतः परस्य तत्त्वस्य

'कदाचित्' कस्याचिदपि समाध्याद्युपलक्षितायां कालकलायां 'लोपः' स्वरूपोच्छेदः 'स्यात्' उपपद्येत; 'अन्यस्य' तद्व्यतिरिक्तस्य वेद्यरूपस्य अनित्यस्य वस्तुनः 'अनुपलम्भनात्' अनुभवाभावात्, न हि वेद्यं नास्ति, वेदकोऽपि नास्ति—इति वक्तुं शक्यम्। कस्य तस्य लोपो न स्यात्? 'यः अन्तर्मुखो' व्यतिरिक्तबाह्यवेद्याभावात् अन्तः स्वात्मन्येव मुखं ज्ञशक्तिर्यस्य स तादृशो 'भाव' आत्माख्यं तत्त्वं, यतः 'सर्वज्ञत्वगुणास्पदं' सकलवेद्यवर्गवेदकतारूपस्य गुणस्य धर्मस्यास्पदम् अनन्यसाधारणम् अधिकरणम्। इदमत्र तात्पर्यम्—आत्मनो ज्ञानक्रियाभेदेन द्विविधा या शक्तिः सा पुरुषावस्थायाम् अन्तःकरणबहिष्करणव्यापारोपरमे सति, केवलस्वात्ममात्राभिमुखज्ञशक्तिमात्रत्वेनावशिष्यते; तेन 'अन्तर्मुखो भाव' इत्युक्तम्। मुखशब्देन च शक्तेः व्यवहारो दृष्टो यथा पारमेश्वरे

'...........शैवीमुखमिहोच्यते ॥'

इत्यादौ । एवं च व्युत्थानावसरे तादृग्दशान्यथानुपपत्तिसद्भावः । स भावो बाह्यविषयाग्रहणमात्रव्यामोहैः अभाव इति तैः योगिभिः प्रतिपद्यते; न तु सततम् अविलुप्तस्वभावैः तस्य भावस्य आत्मविलक्षणवस्त्वनुपलम्भात् कथंचित् लोप उपपद्यते; तदा हि असौ स्वभावमेव अमलगगनतलवत् सर्वतो व्यतिरिक्तं सर्वव्यापकं चित्मात्ररूपतया अनुभवति, केवलं मोहपरवशतया विस्मृतानुसंधायकस्वात्मरूपः तथा न प्रतिपद्यते । प्रबुद्धस्तु यथा प्रतिपद्यते तथा उपायं पुरस्तात् उपदेक्ष्यति । व्याख्यातमेतत्

'न तु योऽन्तर्मुखोऽन्तश्चक्रारूढ'

इत्यादिना वृत्तौ ॥ १६ ॥

इति श्री राजानकरामकृतायां विवृत्याख्यायां स्पन्दकारिकाटीकायां व्यतिरेकोपपत्तिनिर्देशो नाम प्रथमो निःष्यन्दः ॥ १ ॥

अथ

व्यतिरिक्तस्वभावोपलब्धिर्नाम

द्वितीयो निःष्यन्दः ॥

एवं यथाप्रतिज्ञातं देहादिव्यतिरिक्तमात्मतत्त्वं स्वानुभवसिद्धयोपपत्त्या व्यवस्थाप्य इदानीं तदुपलब्ध्युपायोपदेशावसरे सुप्रबुद्धप्रबुद्धाप्रबुद्धभेदेन त्रिविधे लोकतन्त्रे, कस्तावत् प्रस्तुतोपदेशपात्रम् ?– इति विषयव्यवस्थापनाय आह

तस्योपलब्धिः सततं त्रिपदाव्यभिचारिणी।
नित्यं स्यात्सुप्रबुद्धस्य तदाद्यन्तेऽपरस्य तु ॥ १ ॥

'तस्य' यथाप्रतिपादितस्य स्वात्मन एव परमेश्वरस्य 'उपलब्धिः' अनुभवो निर्विकल्पा प्रतिपत्तिः 'नित्यं' सर्वदा सर्वासु अनुभवदशासु 'सुप्रबुद्धस्य' सुष्ठु प्रबुद्धस्य देहाद्यहंप्रत्ययदी-

पं० ४ ग० पु० व्यतिरिक्तस्वरूपमिति पाठः।

र्घदुःस्वप्नमय्या मोहमहानिद्रया मनागपि अ-नावृतसंविदः सिद्धसाध्यस्य सम्यग्दर्शिनः 'स्या-त्' उपपद्यते। कीदृशी? 'सततम्' अव्यवधानेन 'त्रिपदाव्यभिचारिणी' त्रिषु जागरस्वप्नसुषुप्तेषु पदेषु संवेदनभूमिकासु अव्यभिचारिणी अवि-संवादिनी कयाचिदपि अवस्थया अनभिभू-तत्वात् अव्यवहितसंनिधिः। एवम् एतस्य सु-प्रबुद्धस्य स्वीकृतस्वात्मैश्वर्यलक्षणपरासिद्धेरिहो-पदेशविषयत्वं नास्त्येव कृतकृत्यत्वात्। 'अ-परस्य' तत्समनन्तरस्य द्वितीयस्य प्रबुद्धस्य परशक्तिपातप्रभातालोकविलुप्यमानमायातमि-स्रतया समुन्मिषद्विशदविवेकचक्षुषः क्षीयमा-णमोहवशात् अविजृम्भमाणमोहोत्साहसंपदः 'तदाद्यन्ते' तेषां जागरादीनां त्रयाणां पदानाम् आदिभूतं यत् पदं जाग्रदवस्थात्मकं, तस्य अन्तभूतं यत्पदद्वयं स्वप्नसुषुप्ताख्यं, तत्र तस्य

---

पं० १३ ग० पु० अजृम्भमाण इति पाठः।

पं० १६ ख० पु० अन्तर्भूतमिति पाठः।

आत्मतत्त्वस्य उपलब्धिः स्यात् । वृत्तिकृदभिप्रायानुसारेण तदाद्यन्तपदस्य एवं विग्रहः कृतः यतः

'स्वप्नसुषुप्तादौ'

इति तेन एतत्पदं व्याख्यातम् । अत्र च आदिशब्देन स्वप्नसुषुप्तावस्थासंगृहीतस्मृतिमोहाद्यवस्थापरिग्रहः तस्याभिप्रेतः । एवं च व्याख्यानस्य अयमाशयः—इह द्विविध आत्मतत्त्वस्य उपलब्ध्युपदेशः उपक्रान्तो निर्वाह्यश्च; एकः सर्वव्यतिरिक्तचिन्मात्रस्वस्वरूपविषयः; अपरो विश्वात्मकतच्छक्तिचक्रविषयः । उभयरूपोपि अयमुपदेशः अस्मिन् सुषुप्तस्वप्नरूपपदद्वयेऽपि प्रबुद्धस्य प्रायशो नोपयुज्यते, पदत्रय इव सुप्रबुद्धस्य, तत्त्वोपलब्धेरप्रयत्नसिद्धत्वात्; यत एतत्पदद्वयवर्तिसंवित्प्रत्यवमर्शमात्रादेव यथाप्रातिपादितपरतत्त्वोपलब्धिः स्वयमेव तस्य उपपद्य-

पं० ६ क० पु० उत्क्रान्त इति पाठः ।

पं० १० क० पु० दिङ्मात्रेति पाठान्तरम् ।

पं० १२ ग० पु० स्वप्नरूपे पदद्वये इत्यसमस्तः पाठः ।

पं० १४ ख० पु० तत्तत्त्वोपलब्धेन प्रयत्नसिद्धत्वादिति पाठः ।

ते, तथाहि—यदा विगलितसकलवेद्यविकल्पत्वात् निष्केवलां सुषुप्तावस्थां प्रबोधदशायाम् आत्मनः परामृशति, तदा सर्वोपरागरहितस्वरूपमात्रविश्रान्तनित्याविलुप्तचेतयितृमात्रस्वभावम् आत्मतत्त्वं स्वयमेव उपलभते। यदा च तत्ताद्विभिन्नस्वकारणविरहेऽपि स्फुटतरावभासचेतनाचेतनविचित्रभावचक्रनिर्माणमयीं विनिद्रः सन् आत्मनः स्वप्नावस्थां परामृशति तदा तेनैव दृष्टान्तेन प्रबोधबलात् परमकारणस्य स्वभावस्यैव परमेश्वरस्य स्वेच्छामात्रव्यतिरिक्तकारणान्तरनिरपेक्षसर्वकर्तृतारूपं तत्त्वमुपलभते। अप्रबुद्धस्य पुनरेतत् प्रयत्नशतैरपि समर्प्यमाणं तुम्बकतोयद्रववत् नान्तः स्पर्शं करोति। तदेवम् अस्मिन् पदद्वये प्रबुद्धस्य उपलब्धिः स्यात्—इति प्रतिपाद्यते। परिशिष्टे जाग्रत्तुर्याख्ये प-

पं० ४ क० पु० नित्यावलुप्तेति, ग०पु० नित्यालुप्तेति पाठः।

पं० ७ ख० पु० विचित्रां इति व्यस्तपाठः।

पं० ११ ग० पु० तत्त्वमुपलभ्यते इति पाठः।

पं० १३ क० ख० पु० तुम्बकतोयवर्पवादिति पाठः।

दद्वये सा अस्य नास्ति—इति अर्थात् उक्तं भवति। अतो जागरावस्थायां शब्दादिविषयग्राहकव्यग्रेन्द्रियव्यापारव्यवहितं, तुर्यावस्थायां च लोकोत्तरत्वात् अत्यन्तापरिचितं स्वयं दुर्लक्ष्यं परं तत्त्वम् इति तदुपलब्धौ तत्र प्रबुद्धोऽपि उपदेशमपेक्षत एव। यत आह वृत्तिकारः

'जाग्रत्तुर्यौ त्वागममात्रगम्यौ'

इति।

'तस्य चिद्रूपस्य सर्वगतस्य'

इत्यादिना व्याख्यातवान् वृत्तिकृत् एतत् ॥ १ ॥

एवमुपदेशाविषयं व्यवस्थाप्य इदानीं पारमेश्वरस्य तत्त्वस्य सर्वव्यतिरिक्तत्वेन सार्वरूप्येण च द्विप्रकारस्य जागरादिषु चतुर्ष्वपि पदेषु प्रविभागप्रतिपादनायाह

**ज्ञानज्ञेयस्वरूपिण्या शक्त्या परमया युतः।**
**पदद्वये विभुर्भाति तदन्यत्र तु चिन्मयः ॥ २ ॥**

पं० ४ क० पु० दुर्लक्ष्यत्वमिति पाठः।

'विभुः' व्यापक ईश्वरश्चिन्मात्रमूर्तिरात्मा 'पद-द्वये' जागरस्वप्नाभिधाने 'परमया' अत्यद्भुतरूपत्वात् सर्वातिशायिन्या 'शक्त्या' निजेन सामर्थ्येन 'युतः' सहितो 'भाति' चकास्ति प्रकाशते। कीदृश्या शक्त्या? 'ज्ञानज्ञेयस्वरूपिण्या' ज्ञायतेऽनेन इति ज्ञानं, बाह्याभ्यन्तरं करणचक्रं ग्रहणात्मकं ज्ञप्तिमात्रं वा, ज्ञेयं ग्राह्यं शब्दादि सुखादि च विषयजातमनन्तविशेषं, तदेव रूपं विद्यते यस्याः सा तथा तया। किमुक्तं भवति?— परमेश्वर एव स्वमायावशात् नानाक्षेत्रज्ञरूपतयावभासमानः स्वामेव अव्यतिरिक्तां परां शक्तिं ज्ञानज्ञेयभावेन अवभासयन् जागरस्वप्नदशाव्यवहारमुद्भावयति ; एतदेव च अस्याः शक्तेः पारम्यम् — यत् स्वस्य वैभवस्वरूपस्य प्रकाशमानतामतिरोदधती ज्ञानज्ञेयमयानन्तरूपतया स्फुरति। भिन्ने तु अभेदाप्रथनमात्रप्रा-

पं० १४ ग० पु० वैभवस्य रूपस्येति पाठः।

पं० १६ ग० पु० अभेदाप्रधानेति पाठः।

शो मायातमासि विगलितज्ञातृज्ञानज्ञेयविभाग-विभ्रमम् एकमेव परमार्थसत् चित्प्रकाशैकरूपं तादृक्स्वभावानुभवितृतामात्रधर्मलक्षणशक्तिकं तत्त्वमिष्यते, यत आह 'तदन्यत्र तु चिन्मय' इति। तस्मात् उक्तरूपात् पदद्वयात् 'अन्यत्र' अपरत्र सुषुप्ततुर्याभिधाने पदद्वये 'चिन्मयो विभुर्भाति' चेतयत इति चित् उपलब्धृस्व-भाव आत्मा ईश्वरः तन्मात्रप्रकृतिः, तयोः पदयोर्व्यतिरिक्तवेदनीयाभावात् निष्कलस्वा-त्ममात्रविश्रान्तशक्तिरीश्वर एव प्रकाशत इ-त्यर्थः। ननु जागरस्वप्नयोर्ज्ञानज्ञेयमयत्वेन, सुषुप्त-तुर्ययोश्चिन्मयत्वेनैव प्रकाशनाभेदात् पदद्वय-मेव, तत्कथं पदचतुष्टयम् इति?— अत्र उच्यते, जागरस्वप्नपदार्थानां स्थैर्यास्थैर्यप्रतिपत्तिविक-ल्पकृतोऽस्ति भेद इति तत्पदद्वयम्; यतः ईश्वरपरिकल्पितः सर्गो जागरावस्थाया दृढ-

पं० ७ ग०पु० उपलब्धा स्वभाव इति पाठः।
पं० ६ ग०पु० निष्केवल इति पाठः।
पं० १६ ख०पु० पदचतुष्कम् इति पाठः।

त्वेन प्रतिपद्यते, स्वप्ने तु अदृढत्वेन क्षेत्रज्ञ-परिकल्पित इत्यनयोः पदयोर्भेदकारणम् । सुषुप्तावस्थायां तु सदपि चिन्मात्ररूपं तत्त्वं मोहवशादहमित्युपलब्धृचमत्कारविरहात् असदिवाभाति; तस्यैव तु तत्त्वस्य परमार्थसत्तया आत्मत्वेनोपलब्धिस्तुर्यपदे;—इत्ययं सुषुप्ततुर्ययोर्भेदः। तेन चत्वार्येव पदानि विश्व-तैजस-प्राज्ञ-तुर्यादिसंज्ञाभिः शास्त्रान्तरेष्वपि प्रसिद्धानि।

'ज्ञानज्ञेयभेदेन द्विरूपम्'

इत्यादिना व्याख्यातमेतद्वृत्तौ ॥ २ ॥

इदानीमुक्तेन प्रकारेण प्रबुद्धस्यैव उपदेश्यत्वमुपक्रान्तं द्रढयितुम्, अप्रबुद्धानां च तत्प्रतिषेद्धुं श्लोकत्रयमाह

**गुणादिस्पन्दनिःष्यन्दाः सामान्यस्पन्दसंश्रयात्।**
**लब्धात्मलाभाः सततं स्युर्ज्ञस्यापरिपन्थिनः**
**॥ ३ ॥**

---

पं० १ ख० पु० सुप्ते इति पाठान्तरम्।

अप्रबुद्धधियस्त्वेते स्वस्थितिस्थगनोद्यताः।
पातयन्ति दुरुत्तारे घोरे संसारवर्त्मनि ॥ ४ ॥
अतः सततमुद्युक्तः स्पन्दतत्त्वविविक्तये।
जाग्रदेव निजं भावमचिरेणाधिगच्छति
॥ ५ ॥

'अतः' प्रस्तुतव्याख्यानश्लोकत्रयनिर्दिष्टात् हेतोः 'जाग्रदेव' प्रबुद्ध एव 'निजं भावम्' आत्मीयां पारमार्थिकीं सत्ताम् 'अचिरेण' अल्पीयसा कालेन 'अधिगच्छति' सम्यग् उपलभ्य स्वीकरोति। एवकारेणाप्रबुद्धं व्यवच्छिनत्ति। कीदृशः सन्नधिगच्छति ?—'स्पन्दतत्त्वविविक्तये सततमुद्युक्तः' स्पन्दस्य, परस्य शाक्तस्य तत्त्वस्य उपचरितसामान्यविशेषात्मकतया द्विप्रकारत्वेन व्याख्यास्यमानस्य, यत्तत्त्वं परमार्थः यथाक्रममुपादेयतया हेयतया च निश्चितं रूपं, तस्य विविक्तये विवेकाय पृथक्करणाय, एष उपा-

पं० २ ग०पु० संसारसागरे इति पाठः।

देयतमः परमकारणभूतस्य सत्यस्य आत्मस्वरूपस्य–अयमहमस्मि,अतः सर्वं प्रभवति, अत्रैव च प्रलीयते–इति प्रत्यवमर्शात्मको निजो धर्मः सामान्यस्पन्दः; तथैते अत्यन्तहेया विशेषस्पन्दा अनात्मभूतेषु देहादिषु आत्माभिमानमुद्भावयन्तः परस्परभिन्नमायीयप्रमातृविषयाः–सुखितोऽहं दुःखितोऽहम्–इत्यादयो गुणमयाः प्रत्ययप्रवाहाः संसारहेतवः;–इति विभागाय 'सततं' सर्वासु अवस्थासु अव्यवधानेन'उद्युक्तः'उक्तवक्ष्यमाणोपपत्त्युपलब्ध्युपायप्रातिपत्त्याभिव्यज्यमान - स्वबलबृंहणत्वात् अव्याहतोत्साहमध्यवसितः। एतेन प्रबुद्ध एव उपायपरिशीलनैकतानः सन् अचिरेण स्वरूपमुपलभते, नान्यः,–इति प्रतिपादितम्। कुतो हेतोः स एवाधिगच्छति नान्यः? इत्याह – 'गुणादिस्पन्दनिःष्यन्दा' इत्यादि यतो 'गुणादिस्पन्दनिःष्यन्दा ज्ञस्यापरिपन्थिनः स्युः' इति संबन्धः। स्पन्दानां क्षेत्रज्ञज्ञाना-

पं० १ ग० पु० उपादेयपरमेति पाठः।
पं० ११ क० ग० पु० बृंहितत्वात् इति पाठः।

दिशक्तीनां, निःष्यन्दा नानार्थोन्मुख्येन प्रसृताः प्रवाहा भिन्नाः प्रत्ययाः स्पन्दनिःष्यन्दाः, गुणा आदयः प्रथमे प्रधानं येषां ते गुणादयः, सुखाद्यात्मकत्वेन सत्त्वादिमयाः गुणाश्च ते स्पन्दनिःष्यन्दा,—अहं सुखी, दुःखी, मूढः—इत्यादयो ज्ञानभेदाः। किंरूपाः? 'सामान्यस्पन्दसंश्रयात् लब्धात्मलाभाः' सामान्यस्य सर्वव्यापकस्यान्तर्लीनानन्तविशेषस्य परस्य शक्तिस्फुरितस्य 'संश्रयात्' सम्यक् अनन्यशरणतया श्रयणाद् भजनाद्धेतोः 'लब्धात्मलाभाः' लब्ध आसादितः तेन तेन भिन्नेनाकारेण आत्मनः स्वस्वरूपस्य लाभ उदयो यैस्ते तथाविधा गुणादिस्पन्दनिःष्यन्दाः 'ज्ञस्य' परमेश्वरानुग्रहोदितहेयोपादेयप्रत्ययप्रमातृभावस्य, सामान्यस्पन्द एव परमेश्वरमुख्यशक्ति-

---

पं० २ ख० पु० अभिन्ना इति पाठः।

पं० १२ क०ग० पु०स्वरूपस्येति पाठः।

पं० १४ क०ग०पु० ग्रहोचितेति पाठः।

पं० १५ ख० पु० पारमेश्वरेति पाठान्तरम्

त्वेन प्रतिष्ठितनिर्विकल्पप्रतिपत्तेः सुखाद्युपाध्युपरागजनितान्योन्यभिन्नरूपेभ्यो विशेषस्पन्देभ्यो व्यावृत्तस्वशक्त्यभिमानस्य उक्तवक्ष्यमाणयुक्त्यभ्यासनित्योद्योगेन विजिगीषमाणस्य 'अपरिपन्थिनः स्युः' स्वबलाविर्भावात् प्रतिहतस्वभावावरणसामर्थ्याः सन्तः अप्रतिद्वन्द्विनः संपद्येरन्, परतत्त्वोपलब्ध्युत्साहं निहन्तुं न प्रभवेयुरिति यावत्। इदमत्र तात्पर्यम्— ये केचन यस्य कस्यचिन्मायीयस्य प्रमातुः सुखाद्यात्मकत्वात् गुणमयाः स्पन्दनिःष्यन्दाः प्रत्ययसंधानाः प्रसरन्ति ते सर्वे एकमेव सामान्यस्पन्दमाश्रित्य तं तमात्मानं प्रतिलभन्ते; प्रबुद्ध एव तु तदुदयाभिज्ञप्रज्ञापात्रम्; अ[illegible]स्य नित्योद्योगिनः सतः एते प्रयोगिनो भवितुं न प्रभवन्ति। ये

---

पं० ३ क० पु० व्यावृत्तस्येति असमस्तपाठः।

पं० ११ ख० पु० प्रतिसंधाना इति पाठः।

पं० १३ ख० क० पु० एव तु तथा तदुदयेति तथाशब्दाधिक्योपेतः पाठः।

स्वप्रबुद्धाः तैरेते दुर्निवारप्रसराः, इत्याह—
'अप्रबुद्धधियस्तु' इत्यादि,— अप्रबुद्धा पा-
रमेश्वरपरानुग्रहविरहादविगलितगाढाज्ञाननिद्रा
धीः प्रज्ञा येषां ते तथा, तान् पुनरमी
यथाव्याख्याता गुणादिस्पन्दनिःष्यन्दा 'घोरे'
विभीषिकाशतसंकुलत्वाद् दारुणे, अत एव
'दुरुत्तारे' दुर्लङ्घ्ये 'संसारवर्त्मनि' जन्मादि-
प्रबन्धमार्गे 'पातयन्ति' तत्रानवरतं भ्राम-
यन्ति। कीदृशाः सन्तः?—'स्वस्थितिस्थगनोद्य-
ताः' स्वस्मिन् परमात्मनि सामान्यस्पन्दमात्र-
कर्मके स्थितिर्निर्विकल्पप्रतिपत्तिप्रभवा सुस्थि-
रा प्रतिष्ठा तस्याः 'स्थगने' सद्य एव आच्छादने
'उद्यता' गृहीतोद्योगाः प्रतिपक्षभूतस्य प्रबो-
धस्याभावात् लब्धप्रसरत्वादेवमुपचरिताः ।
किम् उक्तं भवति?— यथा कांश्चिद् राजादीन्

---

पं० ७ ग०पु० संसारसागरे इति पाठः।
पं० ८ क० पु० भ्रमयन्तीति पाठः।
पं० ११ क० पु० प्रभावा इति पाठः।

प्रमादित्वाद्यवस्थासत्त्वात् सदपि सैन्यादिस्व-
सामर्थ्यं सत्त्वेनाप्रतिपद्यमानान् अन्तरप्रेक्षि-
णो विपक्षाः स्वपदव्यपरोपणबद्धाभियोगा
महति व्यसने पातयन्ति, आ स्वसामर्थ्यस-
द्भावप्रतिपत्तेः। एवमप्रबुद्धस्य सर्वकर्तृत्वादि-
लक्षणं निजं महिमानं सामान्यस्पन्दरूपं वि-
द्यमानमपि अप्रतिबुद्ध्यमानस्य सर्वकार्यपरत-
न्त्रं देहादिसर्गमेवात्मत्वेनावगच्छत एते ल-
ब्धप्रसराः सुखितोऽहम् इत्यादयो गुणप्रधा-
नाः प्रत्ययप्रवाहाः सत्ये स्वात्मनि स्थितिं व्यव-
धाय संसारमेवासादयन्ति, आ प्रबोधप्राप्तेः,—
इति प्रबुद्धा एवास्योपदेशस्य विषया नाप्रबु-
द्धाः। तेषां हि कथंचिद् गृहीतमप्युपदेशवच-
नं निश्चायकप्रतिपत्तिशिथिलप्रज्ञत्वान्नान्तर्वि-
श्राम्यति। यथोक्तं केनापि

'ज्ञेयत्वमप्युपगता हृदये न रोढुं
शक्ताः प्रमूढमनसामुपदेशवाचः।
आर्द्रत्वमादधति किं नलिनीदलानां
श्लिष्टा चिरन्तनतयापि नभोऽम्बुधाराः॥',

इति। तत्र

'जाग्रदवस्थायामेव'

इति वृत्तिग्रन्थः, प्रकृतानुसारेण प्रबुद्धावस्थायाम्,—इति बोद्धव्यम्। यदि वा सततोद्युक्तपदेन प्रबुद्धस्वीकारे सति मन नोद्युक्तः प्रबुद्धो यत्नसा-सोपदेशक्रमेण जाग्रदवस्थायां व्यवहारदशायामेव निजं भावमधिगच्छति,—इति व्याख्येयम्। व्याख्यातमेतत् श्लोकत्रयं वृत्तौ विभागेन

'अतः सततं सर्वकालं यः करोति'

इत्यादिना। तथा

'गुणस्पन्दस्य सत्त्वरजस्तमोरूपस्य'

इत्यादिना। तथा

'स्वल्पधीयांस्तु'

इत्यादिना ग्रन्थेन ॥ ३ ॥ ४ ॥ ५ ॥

एवं प्रबुद्धस्यैव जागरतुर्यपदयोरुपदेश्यत्वे व्यवस्थापिते सर्वशरीरसाधारणजाग्रद्वृत्त्यन्तरलीनामेव तावत्परतत्त्वोपलब्धिमुपदेष्टुमाह

**अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वा मृशन्।**
**धावन्वा यत्पदं गच्छेत्तत्र स्पन्दः प्रतिष्ठितः**
**॥ ६ ॥**

सामान्यविशेषभेदेन प्रतिष्ठिताप्रतिष्ठितरूप
त्वात् स्पन्दस्य द्वैविध्ये स्थिते, उपादेयः 'प्रति
ष्ठितः स्पन्दः' तत्र पदे उपलभ्यते इति संबन्ध
यः प्रतिष्ठितश्चलत्वव्यपदेशहेतुः सुखित्वाद्या
त्यविशेषस्पन्दाविषयत्वादप्रकम्पस्थितिः स
भावमात्राधारः सामान्यरूपो मुख्यः स्पन्द
प्रत्यस्तमितसमस्तविशेषशक्तिचक्रपरमात्मधर्म
स 'तत्र' तस्मिन् अधुनैव निर्दिश्यमाने पदे उ
लक्षणीयः। कस्मिन्?'यत्पदम् अतिक्रुद्धो गच्छे
त्' प्रत्यग्रक्षत-दारुणोपद्रव-द्विषद्दर्शनादिना त
ब्रतरकोपाविष्टः तज्जन्यविकारावस्थायाः प्रा
झटिति जातमात्रक्रोधो 'यत्पदं' यां भूमिकां '
च्छेत्' मनसा आसादयेत्; तथा 'अतिप्रहृ
यत्पदं गच्छेत्' मृतप्रत्युत्थितप्राणसमप्रमदा
दर्शनादिना'प्रहृष्टः'प्रकृष्टेन परमेणातिशयेन
ष्टः प्रमुदित आनन्दनिर्भरः, तथैव उत्पन्नमा
हर्षो यत्पदं गच्छेत्; तथा 'किं करोमि इ

पं० २ ग० पु० द्वे विधे इति पाठः।

मृशन्' यत् पदं गच्छेत्; क्रुद्धेन राज्ञा रिपुणा वा बलवताभियुक्तस्तत्प्रतीकाराय कर्तव्यंनिश्चयमलभमानः केवलं 'किं करोमि' किमुपायमत्रावलम्बेय—इति प्रतिपत्तिमूढ एव 'मृशन्' विकल्पयन् निरालम्बनचित्तवृत्तिर्यां भूमिकामधितिष्ठेत् तत्र प्रतिष्ठितस्पन्दोपलब्धिरित्यर्थः एतेन प्रकारत्रयेण दुःख-सुख-मोहात्मविषयग्रहणरूपान्तःकरणव्यापारमयजाग्रदवस्थाविषयेण एवंविधानि प्रकारान्तराणि संगृहीतानि वेदितव्यानि। तेन अतिक्रुद्धवत् अशङ्कितेष्टजनविनाशश्रवणादिना कारणेन अतिशोकाविष्टोऽपि शोकव्यञ्जकास्रुप्रलयादिविकृतेः प्रागेव समुन्मिषितमात्रशोको यत्पदं गच्छेत्; तथा अकस्मात् कुपितकृष्णोरगव्याघ्रादिग्रासगोचरगमनादिना निमित्तेन अतिभीतः तथैव सद्यः समुद्भूतमात्रभयो यत्पदं गच्छेत्; तथात्यन्तजुगुप्सास्पद-

पं० २ ग० पु० तत्प्रतिवादायेति पाठः।

पं० ७ ख०पु० मोहाद्यात्मक इति, ग०पु० मोहात्मक इति पाठः।

पं० १० क० पु० अतिक्रोधवदिति पाठः।

पदार्थदर्शनादिहेतुना जातमात्रजुगुप्सो यत्पदं गच्छेत्, तत्रापि प्रतिष्ठितस्पन्दोपलब्धिः,—इत्युपदिष्टं भवति; क्रोध-शोक-भय-जुगुप्साभेदेन चतुर्विधस्य दुःखराशेः अतिक्रुद्धशब्देन उपलक्षितत्वात् । तथा प्रहृष्टवानिजवीर्यबलसंपत्तिसंभावनादिहेतुना सुदुष्करमपि कार्यं निर्वर्तयितुं निर्विकल्पमेव उत्सहमानो झटिति यत्पदं गच्छेत्; तथैव अदृष्टपूर्वपरमरमणीयादिपदार्थदर्शनादिना सपदि अतिविस्मयाविष्टो यत्पदं गच्छेत्; तथा कुहनादिना कारणेन उत्पन्नमात्रातिहासो यत्पदं गच्छेत्, तत्रापि प्रतिष्ठितस्पन्दोपलब्धिः,—इत्युपदिष्टं भवति; हर्षोत्साह-विस्मय-हासभेदेन चतूरूपसुखराशेरतिप्रहृष्टशब्देनोपलक्षितत्वात् । तथा किंकर्तव्यतामूढवत् दूरत्वादिना दृष्टार्थनिश्चयावधारणाभावात् संशयाविष्टो यत्पदं गच्छेत्, तत्रापि पूर्ववदुपलब्धिः,—इत्युपदिष्टं भवति; विस्मरणादिदशासु तत्त्वाप्र-

पं० १३ क० पु० हर्षराशेरिति पाठः।
पं० १५ ख०ग०पु० दृष्टार्थं इति पाठः।

तिपत्तिलक्षणस्य बहुविधस्य मोहराशेः किंकर्तव्यतामूढभावेन उपलक्षणात्। एवमन्तःकरणव्यापाररूपजाग्रदवस्थाश्रयं स्पन्दतत्त्वोपलब्ध्युपायमभिधाय, बुद्धीन्द्रियव्यापाररूपजाग्रदवस्थाश्रयस्य अस्य 'यथा ह्यर्थोऽस्फुटो दृष्टः' (४ नि० ६का०) इत्यत्र प्रसङ्गाद्वक्ष्यमाणत्वात्; संप्रति कर्मेन्द्रियव्यापाररूपजाग्रदवस्थाश्रयं तं पदं प्रतिपादयितुमाह—'धावन्वा यत्पदं गच्छेत् तत्र' इति, 'तत्र' तस्मिन्नपि पदे प्रतिष्ठितस्पन्दोपलब्धिः। तत्र हि इच्छाप्रयत्नज्ञानक्रियादिवृत्तीनां विभागावधारणाद् अद्वयेश्वररूपाभिव्यक्तिः। तथा हि—धावतः प्रतिपदं पदोज्जिहीर्षोद्धारप्रयत्नदेशावधारणपदविन्यासक्रियादिषु वृत्तिविशेषेषु सत्स्वेव अनवधार्यमाणविभागत्वात् असत्स्विव संवित् अविभागपरस्वभावमात्रप्रतिष्ठिता भवति, तदा परवश एव पुमानैश्वरं रूपमाविशति। एतदपि वागादिकर्मेन्द्रियव्यापारोपलक्षणार्थं वेदितव्यम्। तेन धावद्वद्

अतिच स्वर्णस्वरोच्चारव्यवहारवृत्तिरपि यत्पदं गच्छेत्, तथा वीणावेणुवादनादिस्वरिततरव्यापार्यमाणकराङ्गुलिकलापो यत्पदं गच्छेत्; तत्रापि प्रतिष्ठितस्पन्दोपलब्धिः,—इत्युपदिष्टं भवति; सर्वकर्मेन्द्रियव्यापाराणां धावत्पदेन उपलक्षणात्। 'यथा ह्यर्थोऽस्फुटो दृष्ट' इत्यादिश्लोके बुद्धीन्द्रियव्यापारगतामेतामुपलब्धिं दर्शयिष्यति। यद्यपि च सर्वस्य प्राणभृतः सर्वासु अवस्थासु सर्वेन्द्रियवृत्तयो न अन्तरेण नित्योदितप्रतिष्ठितस्पन्दप्रकाशपरिस्फुरितसमापत्तिम् उन्मिषितुमेव प्रभवन्ति, तथापि मायाशक्त्युद्भावितभेदावभासबलात् नानारूपेण उल्लसद्भिः अनन्तैः ज्ञानाक्रियाविशेषैः व्यवधीयमान इवासौ प्रतिष्ठितः स्पन्दः प्रबुद्धस्यापि उपलब्धिगोचरत्वं गमयितुमशक्य,—इति तदुपलब्धियोग्याः काश्चिदेव अतिक्षुब्धत्वादग्रा दशा उदाहरणेन संगृह्य उपदिष्टाः। एताश्च प्रबुद्धस्य प्रत्यवमृश्यमानाः सद्यः प्रतिष्ठितस्पन्दोपलब्ध्यु-

वायतां भजन्ते, न तु अनुभूयमानाः; सा हि अवस्था दुःखादिमय्येव। ततो निष्क्रान्तस्तु प्रबुद्ध उपदेशबलाद् उपजाततादृशात्मस्वरूपविवेचनक्रमप्रज्ञाते यः स्पन्दतत्त्वमनुभवति; यदनुशीलनैकाग्र्यात् क्रमेण सुप्रबुद्धपदवीमाधिरूढः सर्वत्र अनुभविष्यति,—इति। विवृतमेतत्

'तस्य च स्पन्दतत्त्वस्य'

इत्यादिना वृत्तौ ॥ ६ ॥

अथ जाग्रद्वृत्त्यन्तर्लीनतुर्यदशागतस्वभावोपलब्धये श्लोकत्रयमुपायोपदेशमाह, तत्र युगलकं तावत्

यामवस्थां समालम्ब्य यदयं मम वक्ष्यति।
तदवश्यं करिष्येऽहमिति संकल्प्य तिष्ठति॥
तामाश्रित्योर्ध्वमार्गेण चन्द्रसूर्यावुभावपि।
सौषुम्नेऽध्वन्यस्तमितो हित्वा ब्रह्माण्डगोचरम्॥ ७॥ ८॥

'तां' यच्छब्दोपलक्षितवाक्यनिर्दिष्टम् अव-

---

पं० १४ क० पु० सोमसूर्यावि ति पाठ

स्थां दशाम् 'आश्रित्य' आसाद्य पुरुषस्य 'चन्द्रसूर्यौ' मनःप्राणौ द्वावपि युगपदेव 'अस्तमितः' प्रलीयेते। किं कृत्वा? तादृग्दशाश्रय सामर्थ्यादेव 'ब्रह्माण्डगोचरं हित्वा' यदन्तस्तद्बहिः—इति 'ब्रह्माण्डं' शरीरं स एव 'गोचरः' स्वप्रसराधिकरणं, तं 'हित्वा' त्यक्त्वा संवेद्यताभावादतिक्रम्येत्यर्थः। केन पथा अस्तमितः? 'ऊर्ध्वमार्गेण' सर्वातिरिक्तेन अलौकिकेन वर्त्मना। तथा च—चन्द्रशब्दप्रतिपादिता मनःप्रसररूपा ज्ञानशक्तिः इदं हेयमिदमुपादेयम्—इति द्विधा संसारगोचरैव, आलम्बनीयं निजं विषयमतीत्य तस्यां दशायां मध्यस्थतां प्राप्य स्वकारण एव अस्तमेति; तथा सूर्यशब्दोदिता प्राणप्रसररूपा क्रियाशक्तिः नानानाडीसंचारलक्षणां कुसृतिमखिलां खिलीकृत्य सामान्यप्राणरूपतामापन्ना लोकातिरिक्तेन पथा स्वपद एव शाम्यति। ततः 'सौषुम्नेऽध्वन्यस्तामित' इत्याह—सुषुम्नाभिधा शरीरमध्यमध्यासिता या नाडी

तदीये 'अध्वनि' परस्याः पारमेश्वर्याः शक्तेः प्रवहणमार्गे प्रशाम्यतः; ज्ञेयकार्योपरागपरित्यागात् परशक्तिरूपतामापद्येते,—इति यावत्। कां तां दशामाश्रित्य? इत्याह—'यामवस्थां समालम्ब्य' सम्यक्त्यक्तसमस्तवस्तुव्यापृतिस्तिमितसर्वशक्तितया अवलम्ब्य अवष्टभ्य कस्मिंश्चिदवसरे पुरुषस्तिष्ठति। किं कृत्वा? समालम्ब्येति, समालम्बनक्रियापूर्वभाविक्रियान्तरादि वाक्यमाह—'इति संकल्प्य' इति, इत्येवं संकल्पं कृत्वा। कथं? 'यदयं मम वक्ष्यति तदवश्यं करिष्येऽहम्' इति, यस्य आज्ञातिक्रमात् सद्य एव प्राणात्ययादिरनर्थः समापतति, सोऽत्र राजादिः 'अयम्' इति निर्दिष्टः, 'अयं यद्' वस्तु 'मम' कर्तव्यतया 'वक्ष्यति' जल्पिष्यति 'तदवश्यं' सर्वात्मना परिहृतसमस्तान्यकरणीयोऽहं 'करिष्ये' संपादयामि,—इति युगलकस्य वाक्यार्थसंगतिः। इदं तु तात्पर्यम्—केनचित्कारणेन अवश्यकरणीयवचसा प्रभविष्णुना कारयितव्यवस्तुविव-

पं० २ ख० पु० प्रवाहमार्गे इति पाठः।

त्त्वया आक्षिप्तस्य पुंसः तद्वचनशुश्रूषामात्रनि-विडावधानत्वात् समस्तवृत्तिप्रत्यस्तमये सति, संवित् तुरीयां दशाम् अवश्यमेवाविशति, तत्प्रत्यवमर्शाभ्यासात् परतत्त्वोपलब्धिः,—इति। अत्र ब्रह्माण्डगोचरशब्देन शरीराकाशस्य चन्द्रसूर्यशब्दाभ्यां मनःप्राणप्रसरयोश्च प्रतिपादनम्। प्रयोजनम् अनेन उपदे ेन प्रत्यभिज्ञापिततुरीयदशाप्रत्यवमर्शाभ्यासकाष्ठाधिरोहिणः प्रबुद्धस्य निखिलबाह्याभ्यन्तराध्यातिदेहान्तपरमपदाविश्रान्तिलाभः,—इति। व्याख्यातमेतत् पृथक् वृत्तिकृता

'यां स्पन्दरूपामवस्थाम्'

इत्यादिना

'तस्य तामवस्थाम्'

इत्यादिना च ग्रन्थेन ॥ ८ ॥

ननु एवंविधा दशा सर्वस्य कस्याचित्कथंचित् उपजायत एव, तत्किमुपदेशेन—इत्याह

तदा तस्मिन्महाव्योम्नि
प्रलीनश शिभास्करे ।
सौषुप्तपदवन्मूढः
प्र द्धः स्यादनावृतः ॥ ९ ॥

'तदा' तत्र तादृशदशाविशिष्टे काले सोऽम्ना-ख्यशब्दप्रतिपादिते 'महाव्योम्नि' परमाकाशे समस्तवेद्यव्यतिरिक्तस्वरूपत्वात् शब्दगुणात्मकभूताकाशस्वरूपवैलक्षण्यात् महाव्योमशब्द-प्रतिपादिते स्वस्वभाव एव, कीदृशे? 'प्रलीन-शशिभास्करे' प्रत्यस्तमितसमस्तज्ञानक्रियाप्रसरप्रपञ्चे, मूढः परमेशतिग्मरश्मिपरमशक्त्यंशु-स्पर्शाभावाद् अनिद्राणपशुप्रत्ययनिद्राद्यवसादः सौषुप्तपदवत्स्यात्' सुषुप्तावस्थायामिव भवेत्। यथा सुषुप्तावस्था प्रलीनाखिलवेद्यप्रपञ्चरूपापि अप्रबुद्धस्य तत्कालम् अनुभवसामर्थ्याभावात् मोहमय्येव, तथा एषा तुर्यदशापि मोहात्मिकैव। 'प्रबुद्धः' पुनरीश्वरशक्तिपातप्रभावात् प्रकर्षेण लोकातिरिक्तातिशयेन बुद्धः प्रत्युदितसम्यग्ज्ञानदृष्टिः तादृग्दशाप्रत्यवमर्शावसरानुभूततुर्याभोगः 'अनावृतो' देहाद्यवच्छिन्नाहंप्रत्ययरू-

---

पं० १ क० पु० ग० पु० तादृग्दशेति पाठः।

पं० ५ क० पु० कीदृशीति पाठः।

पं० ८ सुषुप्तवदित्येव पाठः सर्वत्र आदर्शपुस्तकेषु दृश्यते।

पं० १० क० पु० अस्य अप्रबुद्धस्येति पाठः।

पेण आवरणेन वियुक्तः 'स्यात्' संपद्येत। तदेत-

'तस्मिन्महाव्योम्नि'

इत्यादिना ग्रन्थेन व्याख्यातं वृत्तौ ॥ ९ ॥

एवं देहादिवेद्यवर्गव्यतिरिक्तत्वेन सर्वदशानुस्यूतोपलब्धृमात्रलक्षणैकस्वभावत्वेन च उपपादितस्य प्रतिपादितोपलब्ध्युपायस्य स्वात्मन एव शंकरस्य यत्सामर्थ्यं तदेव अवश्यकरणीयशास्त्रचोदितक्रियासाधनभूतानां मन्त्राणां वीर्यम्—इति प्रबुद्धमेव उपलब्धतादृगात्मस्वभावं प्रति उपदेष्टुं युगलकमाह

तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः।
प्रवर्तन्तेऽधिकाराय करणानीव देहिनाम्॥
तत्रैव संप्रलीयन्ते शान्तरूपा निरञ्जनाः।
सहाराधकचित्तेन तेनैते शिवधर्मिणः
॥१०॥११॥

'तेन' प्रस्तुतव्याख्यानेन हेतुना 'एते' मन्त्रा आराध्यदेवतावाचका वर्णादिसंनिवेशाः, 'शिवधर्मिणः' शिवस्य परमेश्वरस्यानन्यसाधारणः स-

र्वज्ञत्वादिर्गुणो धर्मः स विद्यते येषां ते तथा, शिवाद् भिन्नस्वरूपा इत्यर्थः। केन हेतुना?—यतः 'तत्' समनन्तरप्रतिपादितस्वरूपस्य शिवस्य संवन्धि 'वलं' सामर्थ्यं शक्तिम् 'आक्रम्य' उच्चिचारयिषावस्थायां तदभेदोपपत्त्या स्वीकृत्य 'सर्वज्ञवलशालिनः' सर्वज्ञस्य शिवस्य वलेन श्लाघमाना सन्तः 'अधिकाराय प्रवर्तन्ते' यथास्वं प्रतिनियतकार्यसंपादनसामर्थ्यं प्रसरन्ति। एते हि अनासादितपरमेश्वराभेददशा उत्पादविनाशधर्मकवर्णमात्रात्मकाः तृणमपि कुब्जयितुमशक्ताः; उक्तवलाक्रमणेन तु नियतेतिकर्तव्यतासहाया दीक्षादिवृश्चिकविषाकर्षणान्तपरापरस्वकार्यसंपादनाधिकाराप्रतिहतशक्तयो भवन्ति। यद्येवं सर्वमन्त्राणामुक्तवलाक्रमणलक्षणावीर्यसाम्यं, तत् कथमेषां भिन्नाधिकारित्वं, सर्वे सर्वार्थसाधनाधिकृताः कथं न भवेयुः?—इत्यत्र परमेश्वरपरिकल्पितानियतिनियन्त्रितत्वमे-

पं० ७ क० पु० श्लाघ्यमाना इति पाठः।
पं० ८ क० पु० साम्यार्थमिति पाठः।

व हेतुं प्रतिपादयितुमुपमानमाह – कथमेते मन्त्रा नियताधिकाराय प्रवर्तन्ते साधकानां?– 'देहिनां करणानीव' यथा हि देहादिमात्रानित्यवस्तुव्यवस्थितात्माभिमानानां सर्वशरीरभृतां करणानि इन्द्रियाणि 'यतः करणवर्गोऽयम्' इत्यत्र प्रतिपादितयुक्त्या परमेश्वरादेव चेतनत्वापादनहेतुप्रवृत्त्यादिलाभसाम्ये सत्यपि करणानि तत्परिकल्पितनियतिशक्तिबलात् शब्दादिविषयप्रकाशनमात्रपर्यवसितसामर्थ्यानि यथास्वं पृथक्पृथगधिकाराय प्रवर्तन्ते न सर्वाणि सर्वस्मै; तथैवैते मन्त्राः साधकानां स्वीकृतपरस्वभावाहंभावप्रतिपत्तीनां यथानियमिताधिकाराय प्रवर्तन्ते, तस्मात् करणवत् सर्वज्ञबलशालिनोऽपि मन्त्रा नियताधिकारा एव। ततश्च शिवधर्मिणो मन्त्रा यत्कृताधिकाराः सन्तो 'निरञ्जना' अञ्जनात् वाच्योपरागरूपात् मलात् वर्णादिरूपभावनात्मकाद्वा निष्क्रान्ताः; अत एव 'शान्तरूपाः' शान्तं शुद्धं संविन्मात्रावशे-

षत्वात् निर्विकारं रूपमात्मा येषां ते तादृशाः सन्तः 'तत्रैव' शिवे परमकारणे स्वस्वभावे 'संप्रलीयन्ते' तदैक्यमुपगच्छन्ति । केन साकम्? 'आराधकचित्तेन सह' साधकमनसा साकं । तस्यां हि दशायामभिसंध्युपाधिविरहात् स्वाभाविकमात्रावशेषं यत् साधकचित्तं तेन साकम् । किमनेन तात्त्विकमन्त्रवीर्यं प्रतिपादितं भवति? तदिदं भवति—मन्त्रचेतसः उदयास्तमयदशयोः परमकारणात् शिवादभेदः,—इति मन्त्रात्मकत्वं । साधकचित्तात्मकतया च शिवशक्तिरेव वर्णसंकल्पादिरूपधारिणी उदिता सती, संप्रति अनासादितस्वस्वभावबलस्पर्शप्रतिपत्तीनां साधकानां भेदविभ्रममुत्पादयन्ती नियतार्थसाधनाधिकाराय पर्यवस्यति । यस्तु यथाप्रतिपादिते स्वस्वभावे एव सुदृढात्मप्रतिपत्तिः, तस्य उदयास्तमयज्ञस्य सर्व-

पं० २ ख० पु० तादात्म्यमुपयान्ति इति पाठः ।

मन्त्राः सर्वार्थसाधनाधिकारिणो भवन्ति तत्त-दितिकर्तव्यतासाहित्यनिरपेक्षं व्यपेक्षां विना; आसतां वा मन्त्राः, यद्यद्वचनं येन येनाभिसंधिना उच्चारयति तत् तस्यामोघमन्त्रतामापद्यते,-इति स्वानुभवसिद्धं स्वतो मन्त्राणां वीर्यं प्रत्यवमष्टव्यं योगिना,-इति तात्पर्यार्थः। उपलक्षणार्थं मन्तव्यं चैतत्। उक्तोपपत्त्या न केवलं मन्त्रा एव शिवधर्मिणो, यावन्न काचित्क्रिया ज्ञानं कार्यं ज्ञेयं वा वस्तु संभवति, यत् परतत्त्वाभेदापत्तिलब्धात्मकं सत् शिवात्मकमेव न भवति,-इति समनन्तरमेव वक्ष्यति। व्याख्यातम् एतत् वृत्तौ

'यद्बलं निरावरणचिद्रूपम्'

इत्यादिना ॥ ११ ॥

इति राजानकश्रीरामविरचितायां स्पन्दविवृतौ व्यतिरिक्तस्वभावोपलब्धिर्नाम द्वितीयो निःष्यन्दः॥ २॥

•

अथ

## विश्वस्वभावशक्त्युपपत्तिर्नाम तृतीयो निःष्यन्दः ॥

इदानीं पक्षान्तरोपन्यासभङ्ग्या प्रकरणारम्भश्लोकापरार्धप्रतिज्ञातं स्वस्वभावस्यैव शिवस्य विश्वव्यक्तिमयशक्तिचक्रविभवनशीलत्वमवसरप्राप्तम् उपपत्त्युपलब्धिभ्यां निर्वाहयितुं श्लोकत्रयमाह

यस्मात्सर्वमयो जीवः सर्वभावसमुद्भवात् ।
तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः ॥ १ ॥

तेन शब्दार्थचिन्तासु
न सावस्था न या शिवः ।
भोक्तैव भोग्यभावेन
सदा सर्वत्र संस्थितः ॥ २ ॥

इति वा यस्य संवित्तिः
क्रीडात्वेनाखिलं जगत् ।
स पश्यन्सततं युक्तो
जीवन्मुक्तो न संशयः ॥ ३ ॥

'यस्य इति वा संवित्तिः स जीवन्मुक्त' इति संबन्धः, इत्येवम् इदानीमेव प्रतिपाद्यप्रकारेण 'यस्य वा' साधकोत्तमस्य 'संवित्तिः' सम्यक् ज्ञानं स 'सततम्' अव्यवधानेन सर्वावस्थासु 'युक्तः' समाहितः, उक्तवक्ष्यमाणोपदेशदृशा स्वभावबलपरिशीलनाप्रमत्तैकाग्रमानसः 'स जीवन्' नियतदेहाधिकरणान् प्राणान् धारयन् एव 'मुक्तः' सर्वव्यापकसर्वात्मकसर्वेश्वरस्वतन्त्रस्वस्वभावाहंकारप्रतिपत्तिदार्ढ्येन जन्मादिविरोधात् निष्क्रान्तः परमेश्वर एव संवृत्त—इत्यत्र 'न संशयो' न भ्रान्तिः; स्वसंवेद्योपपत्त्युपलब्धिनिष्प्रकम्पत्वात् अस्य अर्थस्य। किं कुर्वन् जीवन्मुक्तः?—'अखिलम्' अशेषमनन्तवस्तुव्यक्तिविचित्रं 'जगत्' विश्वं 'क्रीडात्वेन' स्वनिर्मितचराचरभावक्रीडनकोपरचितलीलामात्रतया 'पश्यन्' विभावयन्। सर्वो हि जनः अनुन्मिषितस्वस्वभावनिभालनक्षमवि-

---

पं० १२ ग० पु० वस्त्वभिव्यक्तिचित्रमिति पाठः।

पं० १६ ग० पु० मिषितस्वभावनिरूपणेति पाठः।

मलविज्ञानदृष्टिरात्मनोऽन्योन्यतश्च विभिन्नम् इदमखिलं भा जातं कुताश्चिदन्यतः कारणात् उद्भूतम् अनिशं मन्यमानः, तद्भावजन्यहर्षशोकभयादिविकारा अनुभवन्, भवाध्वनि पुनः पुनः जन्मादिबन्धनभाजनतां भजते। यस्तु प्रतिपाद्यप्रकारेण उत्पन्नपरसंविदाभिव्यक्तिः, स यथा कश्चित् क्रीडापरः स्वपरिकल्पितैः भयक्रोधादिकार णभूतभावप्रतिच्छन्दकैः क्रीडन् तद्याथात्म्यवेदित्वात् भयादिविकारकलुषं मनागपि नापद्यते, तथैव भावानां स्वस्वभावशक्तिविजृम्भितमात्रतया याथात्म्यवेदी सन् मनागपि विकृतिं न आपद्यते। एवं सर्वं क्रीडात्वेनैव पश्यन् जीवन्नेव मुक्तः। कथं यस्य संवित्तिः? इति,—तेनेत्यादिश्लोकेन प्रतिपादयति; 'तेन' वक्ष्यमाणेन हेतुना 'शब्दार्थचिन्तासु सा अवस्थैव नास्ति या न शिवः'—इति यस्य संवित्तिः स जीवन्मुक्तः, इति। शब्दोऽर्थप्रत्यायकः पदसमुदायः, अर्थो जात्यादिभेदात् बहुविधम्

अभिधेयं वस्तुजातं, तयोः 'चिन्ता' तथा तथा विकल्पनाः अनन्तचिन्तनीयवस्तूपरागात् विचित्राणि ज्ञानानि, यन्मयो व्यवहारः एतासु शब्दार्थचिन्तासु 'सा अवस्था' दशा न काचित्, शब्दचिन्तारूपा अर्थचिन्तारूपा वा संभवति, या शिव एव साक्षात् न भवति। यत एवं तदा 'भोक्ता' अनुभवितैव ईश्वरः 'सदा' नित्यं 'सर्वत्र' सर्वासु अवस्थासु 'भोग्यभावेन' अनुभवनीयवस्त्वात्मना 'स्थितो' न पृथक् किंचित् भोग्यं नामास्ति, तत्त्वानवमर्शमात्रविजृम्भितम् एतत् भोक्तृभोग्यविभागरूपम्। केन हेतुना 'न सावस्था न या शिवः'? इत्याह,—'यस्मात् जीवः' आत्मा 'सर्वमयो' विश्वरूपः परस्परव्यतिरिक्तप्रतिपत्तिः, जीवस्यापि यो व्यवहारः सोऽपि वेद्यवेदकाभेदपूर्वकतयैव उपपन्नः—इत्यर्थः, कुत एतत्? 'तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः सर्व-

पं॰ १० क॰ पु॰ तत्त्वावमर्शेति पाठः।

भावसमुद्भवात् सर्वमयो जीवः' तस्य कस्यचित् संवेद्यस्य घटसुखादेः यत् 'संवेदनं' ज्ञानं, तस्य यत् 'रूपं' स्वभावः, तेन हेतुना या 'तादात्म्यप्रतिपत्तिः' तदभेदसंवित्, ततो हेतोः निर्वर्तमानो यः 'सर्वभावसमुद्भवः' सर्वेषां भावानां उत्पत्तिः, तस्मात् सर्वमयो जीवः। किमुक्तं भवति—जीवस्यैव व्यवहारो विचार्यमाणोऽयं वस्तुयाथात्म्यमुपपादयति। तथाहि—अयं स्वविषयं संविदन्नेव समुद्भावयाति सृजति, संवेद्यमानमेव हि वस्तु स्वरूपं लभते, न तु असंवेद्यमानं; संवेद्यमानता च तेन तेन रूपेण प्रकाशमानता; प्रकाशमानत्वं च प्रकाशाद्व्यतिरिक्तं, नान्यत् किंचित्। यदाह न्यायवादी

'चेतनाश्चापि वेद्यत्वादतद्रूपवेदनात्।'

इति। एवं च यत् यत् अयं जीवः संवेत्ति तत्तदस्य शरीरमेव संपद्यते, न तु नियताशिरः-

पं० १ ग० पु० सर्वमय इत्यनन्तरं विश्वमयः इत्यधिकः पाठः।

पं० २ क० पु० घटसुखगवादेरिति पाठः।

पाण्याद्यवयवसंनिवेश एव, सोऽपि हि अस्य संवेद्यमानतावस्थायामेव शरीरीभवति, अन्यदा तु व्यतिरिक्तो विषय एव। तथा च—संवेद्यमानत्वसामान्यात् द्विविधं शरीरमस्याभातं तत्त्वविद्भिः, भूतात्मकं भावात्मकं च; तत्र मायाशक्तिवैभवविस्मारिततात्त्विकस्वभावतया वस्तुसंवेदनावसरे स्वरूपापरामर्शत्वमुकुलितसामर्थ्योऽयं जीवः अवच्छिन्नाहंकारास्पदतया शिरःपाण्यादिमच्छरीरत्वेन यत् परामृशति तत् अस्य स्पृष्ट्यादिमयत्वात् भूतात्मकम्—इत्युक्तम्। यत्तु व्यतिरिक्तं शब्दादिविषयत्वेन परामृशति तद्भावात्मकं। परमार्थे तु विचार्यमाणे द्वयमप्यस्य शरीरं संवेद्यमानत्वाविशेषात्। एवं संवेद्यमानतालक्षणाभावसंसर्गावस्थायां जीवः संवेद्यवस्त्वव्यतिरेकात् सर्वमयो विश्वरूपः स्थितोऽपि सन् तथावस्तु संवेदनतत्त्वपरामर्शानुन्मेषात् सर्वमिदम् आत्मव्यतिरिक्तकारणान्तरलब्धात्मकत्वेन आत्मनः परस्परतश्च पृथक्त्वेन व्यव-

च्छिन्द॰ , आ॰ ानं च देहाद्यनित्यभावाहंभावेन अध्यवस्य॰ जन्मादिबन्धभाक् संसारी जीव इति व्यपदिश्यते। यदा तु शिवदिवाकरशक्त्यंशुपातजनितप्रबोधोन्मिषितविश॰ ॰ ॰ स्फुटतरप्रकाशमानदेहादिव्यतिरिक्तसत्यात्मस्वभावसुस्थिताहंप्रतिपत्तिः सन् यथावस्थितवस्तुसंवेदनपरामर्शशक्तिभिर्व्यक्तिभाक् भवति, तदा स एव संकल्पमात्रविलि॰ ॰ ॰ श्वव्यक्तिमयशक्तिचक्रः शिवः संपद्यते। तेन उक्तम्—तत्तद्वस्तुसंवेदनस्वभावबले॰ या तादात्म्यप्रतिपत्तिः संवेद्यमानवस्॰ भेदसांवित्तितः सर्वभावसमुद्भवः, तस्मात् जीवः तावत् सर्वमयः; तेन च तस्य सर्वमयत्वप्रातिपत्तिलक्ष॰ेन हेतुना सा अवस्था नास्ति या शि॰ ॰ न भवति, ततश्च भोक्तैव ईश्वरो भोग्यभावेन ईशितव्यवस्तुरूपतया सदा सर्वत्र संस्थितः। एवं यस्य वा संवित्तिः स जीवन्॰क्त—इति वाक्यसम-

पं० २ ग० पु० संव्यवस्यन् इति पाठः।
पं० ५ ग० पु० सत्यात्मभावेति पाठः।

न्वयसंकलनार्थमेतत् पु[illegible],—इत्यनेन श्लोकत्रयेण आत्मन एव विश्वरूपत्वेन स्थितिः प्रतिपादिता, विश्वप्रपञ्चस्य निमित्तान्तरानुपपत्तेः । यथोक्तं ब्रह्मविदा

'कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव बुद्ध्यते भेदादिति वेदान्तनिश्चयः ॥'

इति। तथा अन्येनापि स्तुतिद्वारेणोक्तम्

'विविधैरुपाधिभिरवस्थितैर्बहिः
स्फटिकादिवत्तव विचित्रतोच्यताम् ।
यदि ते कदाचन कथंचन कचि-
द्भवितुं क्षमास्त्वदवभासतः पृथक् ॥
परमाणुपाकपरिणामविभ्रमा-
द्युत वा विवर्त इति विश्वमिष्यताम् ।
विबुधोत्तमैर्यदिह तद्विकल्पना-
स्तव शक्तिरेव न तथोपपादयेत् ॥
तदिहापि च प्रतिनिमेषमुन्मिष-
न्निमिषद्विकल्पविविधांशुमण्डलः ।
अथ चातिशुद्धवपुरद्भुतैकभूः
स्फुरसि त्वमेव शिव चिन्मयो मणिः ॥'

---

पं० १ ग० पु० संकल्पनार्थमिति पाठः।
पं० ६ ग० पु० भेदमिति पाठः ।

व्याख्यातमेतत् वृत्तौ पृथक् पृथक्

‘ सर्वात्मक एवायमात्मा’

इत्यादिना

‘तेन तथाविधेन’

इत्यादिना

‘एवं स्वभावे यस्य ’

इत्यादिना च ग्रन्थेन ॥ १ ॥ २ ॥ ३ ॥

इति श्रीराजानकश्रीरामविरचितायां स्पन्दविवृतौ
विश्वस्य स्वस्वभावशक्तिमात्रत्वोपपत्तिर्नाम
तृतीयो निःष्यन्दः ॥ ३ ॥

---

पं० ६ ग० पु० एवंस्वभावस्य इति पाठः ।

अथ

## अभेदोपलब्धिर्नाम

### चतुर्थो निःष्यन्दः ॥

इदानीमियमेव उपपत्तिः सुगृहीता सती, अभेदोपलब्ध्युपायः—इति प्रदर्शयितुं मन्त्रन्यासादिसमस्तविधिसंस्कारकत्वमस्याः प्रतिपादयितुमाह

**अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।**
**तदात्मतासमापत्तिरिच्छतः साधकस्य या ॥ १ ॥**

'तस्य' कस्यचिद् 'ध्येयस्य' तेन तेनाकारेण स्मर्तव्यस्य मन्त्रवाच्यस्य देवताविशेषस्य 'उदयः' तत्तदर्थक्रियासंपादिना अमोघशक्तिना तेन तेनोपास्येनाकारेण प्रथनम्; क्व अधिकरणे?—'ध्यायिचेतसि' ध्यायिनः स्मर्तुः संबन्धिनि चेतसि संकल्पे; कोऽसावुदयः?—'इच्छतः' इच्छाव-

पं० १६ ग० पु० इच्छायां वर्तमानस्येति पाठः ।

स्थायां वर्तमानस्य मन्त्रमुच्चिचारयिषोः 'साधकस्य' अभियुक्तस्य, वस्तुसामर्थ्यसिद्धा या 'तदात्मतासमापत्तिः' तस्य ध्येयस्य य आत्मा स्वरूपं तस्य भावस्तदात्मता तया समापत्तिरेकीभावः। इदमत्र तात्पर्यम्—न्यासादिहेतोर्मन्त्रोच्चारणेच्छावस्थायां मन्त्ररूढान्यदेवताकारायां साधकचेतसः स्वयमप्रयत्नेन संपाद्यमानं यदाभिन्नरूपत्वं, स एव परामर्शक्षमसंविदो ध्यातुर्मुख्य आराध्यदेवतायाः प्रत्यक्षदर्शनरूप उदयो, न तु व्यतिरेकविभाव्यमानाकारता,—इति अनयैव संविदा शिवरूपतापत्तेः ।

'.................... शिवो भूत्वा शिवं यजेत् ।'

इत्यस्य विधेः चरितार्थत्वम् ।

'अयमेव तत्संवेदनद्वारेण'

इत्यादिना व्याख्यातमेतत् वृत्तौ ॥ १ ॥

अस्या एव संविदो विध्यन्तरसंस्कारकत्वमाह

**इयमेवामृतप्राप्तिरयमेवात्मनो ग्रहः ।**
**इयं निर्वाणदीक्षा च शिवसद्भावदायिनी ॥ २ ॥**

पं० ७ ग० पु० चेतसः सर्वमिति पाठः ।

'इयमेव' यथाप्रतिपादिता शरीरादिविनश्वरवस्त्वालम्बनाहंप्रत्ययरूपस्य स्वप्रकाशव्यतिरिक्तवेद्यभावप्रतीतिमयस्य मिथ्याज्ञानस्य उच्छेदात् अनवच्छिन्नस्वच्छस्वच्छन्दस्वभावमात्रैकतत्त्वोपलब्धिरूपा संवित् सम्यग् ज्ञानम् 'अमृतप्राप्तिः' अमृतस्य अविनाशिनः शिवात्मकस्यात्मनः प्राप्तिरुपलब्धिः किल अर्थानुगतामृतप्राप्तिर्भवति, न तु द्रव्यविशेषात्मकस्य जडस्यानित्यस्य वस्तुनः कस्यचित् प्राप्तिरमृतप्राप्तिः, सा हि जीवस्य कालान्तरस्थायिशरीरत्वकारणभावात् एतदुपचारेण एवमुच्यते। तथा 'अयमेवात्मनो ग्रहः' या एवंविधा मन्त्रोच्चारणोच्छलत्तणभाविनी संवित् सोऽयमेवात्मनो जीवस्य ग्रहो ग्रहणं, तेषु तेषु हि दीक्षादिषु विधिविशेषेषु आत्मनः शिष्यसंबन्धिनः स्वस्य वा ग्रहणं शास्त्रेषु उपदिश्यते। यथा उदाहृतं वृत्तौ

'आत्मनो ग्रहणं कुर्याद्दीक्षाकाले गुरुर्धिया।'

---

पं० २ ग० पु० वस्त्ववलम्बनेति पाठः।
पं० ३ ग० पु० प्रतीतिपथस्येति पाठः।

इति। तेन तादृग्विधिसंपत्तये परिकल्पितरूपावि-
शेषस्यात्मनो या परःकारणभूतस्वभावाभेदस-
मापत्तिरुपजायते, सा परामृश्यमाना आत्मग्रह-
णात्मकाविधिसंपादिका भवति, न तु अन्यथा त-
स्यामूर्तस्य ग्रहणं संभवति, ग्रहीतुः परमात्मनः
सर्वव्यापकसंविद्रूपात् तस्याभिन्नत्वात्। तथा
'इयमेव निर्वाणदीक्षा' निर्वाणं निर्वृतिर्द्वैतप्रत्य-
यलक्षणक्षोभपरिक्षयात् आत्यन्तिकी प्रशान्तिः
संविदः स्वस्वभावव्यवस्थितिः, तदर्था दीक्षा
स्वरूपसंबोधदानात्मको भेदमयबन्धक्षपणल-
क्षणश्च संस्कारविशेषः, सा चैवंरूपा निर्वाण-
दीक्षा इयमेव प्रतिपादिता संवित्, एतत्का-
रणत्वात् तस्याः। यत एषा संवित् 'शिवस-
द्भावदायिनी' शिवस्य स्वस्वभावस्यैव परमेश्व-
रस्य यः सद्भावः सत्ता, येन रूपेण अहमेवास्मि—

पं० ४ अमूर्तस्येति वाक्यं ख० पुस्तकादुपन्यस्तम्।

पं० ९ ख० पु० स्वभावावस्थितिरिति पाठः।

पं० १० ग० पु० संबोधनात्मक इति पाठः।

पं० १२ ख० पु० प्रतिपादितरूपा संवित् इति पाठः।

इति प्रतिपत्तिरबाधिता सिद्ध्यवस्थायामुपपद्यते तस्य दायिनी प्रतिपादिका, स हि निरुत्तरः संस्कारः सुप्रबुद्धगुरोर्गोचरः परमशिवात्मकस्वरूपप्राप्तिमात्रो, न तु बाह्यसाधनसाध्यविधिविशेषात्मक इति । व्याख्यातमेतत्

'इयमेव सा मिथ्याज्ञानशून्यस्य'

इत्यादिना वृत्तौ ॥ २ ॥

एवमुत्तमाविधिसंस्कारकारणत्वमस्याः संविदः प्रतिपाद्य, इदानीं सिद्ध्यन्तरकारणत्वं संसारिव्यवहारनिदर्शनेन प्रतिपादयितुं श्लोकद्वयमाह

यथेच्छाभ्यर्थितो धाता
जाग्रतोऽर्थान् हृदि स्थितान् ।
सोमसूर्योदयं कृत्वा
संपादयति देहिनः ॥ ३ ॥

तथा स्वप्नेऽप्यभीष्टार्था-
न्प्रणयस्यानतिक्रमात् ।
नित्यं स्फुटतरं मध्ये
स्थितोऽवश्यं प्रकाशयेत् ॥ ४ ॥

पं० ८ क० पु० करणत्वमिति पाठः ।

'यथा देहिनो' देहमात्रमेव आत्मत्वेन प्रतिपन्नस्य सर्वस्य संसारिणो 'जाग्रतो' यथास्वं विषयग्रहणव्यग्रेन्द्रियवृत्तिलक्षणां जागरावस्थाम् अनुभवतो 'हृदि स्थितान्' आशयनिविष्टान् द्रष्टुम् अभीष्टान् भावान् 'इच्छाभ्यर्थितः' इच्छया दिदृक्षारूपया अभ्यर्थितः, तदवस्थास्वभाववलात् तादात्म्यसमापत्त्या तदर्थसंपत्तेः याचित इव 'धाता' सर्वकर्ता परमेश्वरः परमात्मा 'संपादयति' यथाभिप्रायं प्रकाशयति। किं कृत्वा?—'सोमसूर्ययोः' चक्षुषोः 'उदयम्' अभिप्रेतार्थावधारणमात्रावधानरूपस्वरूपप्रथनं विधाय ,—इत्युपमानवाक्यम्। इ[illegible] तात्पर्यम्—यो यः कश्चित् संसारी यमेवार्थं द्रष्टुमुत्पन्नेच्छो भवति, स तद्दिदृक्षावस्थायां झगित्यवश एव परमात्मानं धातारमभेदेन आविशति, सा अवस्था अस्य प्रार्थना—इत्युपचरिता,तत्पूर्वकतया अभीष्टार्थप्राप्तेः।

पं० १ ख० पु० प्रतिपद्यमानस्येति पाठः।

पं० ४ ख० पु० आशयनिष्ठान् इति पाठः ।

स तया अभ्यर्थितो धाता तावन्मात्रार्थप्रथनाय अवधानात्मना चक्षुषोः स्वरूपव्यक्तिलक्षणमुदयं कृत्वा, संनिहितेष्वपि अन्येषु बहुषु दृश्येषु यादृच्छयैव अभ्यार्थितः तमेवार्थं प्रदर्शयति, नान्यत्। चक्षुषोरुदयं कृत्वा—इति उपलक्षणमात्रमेतत् मन्तव्यम्। तेन शुश्रूषाभ्यर्थितः श्रवणयोरुदयं कृत्वा श्रव्यान्तरसंनिधावपि शुश्रूषितमेव अर्थं श्रावयति धाता देहिनः,—इति सर्वेन्द्रियेष्वपि योज्यम्। चक्षुषोश्च सोमसूर्यशब्देन प्रतिपादनेन विश्वरूपात् धातुर्जीवस्य वास्तवाभेदप्रतिपादनप्रयोजनम्। उपलक्षणार्थं च वृत्तिकृतैव व्याख्यातम्

'चक्षुरादिष्ववधानेन'

इत्यत्रादिग्रहणात्। इत्थं सर्वजीवानां सर्वार्थप्रथनमिच्छापूर्वकं भवति, सा च इच्छावस्था संसारिणः परमकारणाभेदरूपा,—इति परमेश्वर एव स्वतन्त्रो यथेष्टमिदमखिलं प्रका-

पं० ११ ग० पु० प्रतिपादनमिति पाठः।

श्यति—इति परमार्थं तदीयमायाशक्तिजनित-देहादिव्यवच्छेदाः संसारिणो न प्रपद्यन्ते। यस्तु प्रबुद्ध उक्तोपदेशाभ्यासप्रकर्षकषणपाषाणनिशितीकृतप्रज्ञाकृपाणीनिकृत्तकल्पकायाद्यहंकार-कर्कशग्रन्थिरुदितनिरावरणसत्यात्मसंवित्स एव संस्मर्यमाणः तं प्रत्यभिज्ञातुमलम्,—इति सिद्धाव्यतिरेकसमाधियोगिनं प्रति इदमुपमेयवाक्ये-नोपदिश्यते। यथा वा तैरेव प्रतिपादितयुक्त्या इच्छाभ्यर्थितः सन् सर्वार्थान् प्रथयति; 'तथैव' तेन प्रकारेण 'नित्यं' सर्वदा सर्वासु ज्ञातृज्ञेयसंबन्धदशासु 'प्रणयस्य' इच्छावस्थायां तादात्म्य-प्रतिपत्तिरूपायाः प्रार्थनायाः 'अनतिक्रमात्' अनुल्लङ्घनात् प्रत्यवमर्शावहितत्वेन अनुपेक्षणात् 'स्वप्नेऽपि' स्वव्यापारोपरतचक्षुरादौ मनोमात्र-ग्राह्यस्वस्रष्टृविषयायां स्वापावस्थायां यावद् 'अभीष्टान्' साधकाभिमतानेव 'अर्थान्' 'स्फु-

पं० २ ग० पु० करणनिशितीति पाठः।

पं० ६ क० पु० सिद्धव्यतिरेकेति, ग० पु० सिद्धसमाधियोगिनामिति पाठः।

पं० १३ क० पु० अनपेक्षणादिति पाठः।

टतरम्' अतिप्रकटं कृत्वा 'मध्ये स्थितो' हृदये सदासीनो 'ऽवश्यं' नियमेन असौ धाता 'प्रकाशयेत्' प्रथयेत्—इति तथेत्यादेरुपमेयवाक्यस्यार्थः। तात्पर्यं पुनरिदं—यः सर्वदा सर्वानुभवेषु, धातुः सर्वेश्वरस्य स्वस्वभावस्य तल्लीन[illegible] लक्षणं प्रणयं स्वसामर्थ्यसिद्धं प्रतिक्षणप्रत्यवमर्शाविहितत्वात् नातिक्रामति, तस्यासौ धाता जागरवत् स्वप्नेऽपि अभिमतानेवार्थान् प्रकाशयति, न तस्य स्वप्नपदार्थाः स्वातन्त्र्येण प्रवर्त[illegible]नाः सर्वकर्तृत्वलक्षणस्वशक्तिप्रतिबन्धमुद्भावयन्ति असंसारित्वा[illegible]; किंतु स्वत[illegible]: स्व[illegible] यथेष्टं तान् सृजति। यथाह भर्तृहरिः

'प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान्।
सर्वेश्वरः सर्वशक्तिः स्वप्ने भोक्ता प्रपद्यते ॥'

इति। अत एव स्वप्नस्वातन्त्र्यमेतत्—इत्युक्तम्। तस्य स्वप्नजागरयोर्विशेषो नास्ति,—इति तमोवरणनिर्भेदः स एवोक्तः। देहाद्यहन्ताजानितोऽ-

---

पं० ५ ख० पु० लक्षणप्रणयमिति पाठः।

नवच्छिन्नस्वमाहात्म्यनिरोधः तमः, तेन वरणं स्थगनं स्वभावतिरोधानं, तस्य निर्भेदोऽनन्तनिजवैभवाभिव्यक्तिवशात् विनाशः, स हि तस्यामवस्थायामाविर्भवति । व्याख्यातमेतत् वृत्तौ पृथक् पृथक्

'यथा अस्य अनभिव्यक्तस्वस्वरूपस्य'

इत्यादिना । तथा

'स्वप्नेऽप्यभीष्टार्थानेव पश्यति'

इत्यादिना ग्रन्थेन ॥ ३ ॥ ४ ॥

अथ एवंविधसमाधिव्युत्थानमात्रात् संसारिसमानतां योगिनः प्रतिपादयन्, नित्ययुक्ततां द्रढयितुमाह

अन्यथा तु स्वतन्त्रा स्या-
त्सृष्टिस्तद्धर्मकत्वतः ।
सततं लौकिकस्येव
जाग्रत्स्वप्नपदद्वये ॥ ५ ॥

'अन्यथा तु' ज्ञानप्रकारात् अन्येन प्रकारेण, सर्वकर्तुः स्वतन्त्रस्य परमेश्वरस्य एकस्य ममै-

वेदं जगत्कार्यम्—इति प्रतिपत्त्यभावरूपेण वर्तमानस्य योगिनो 'जाग्रत्स्वप्नपदद्वये' जागरस्वापदशयोः 'तद्धर्मकत्वतः' सर्गगुणात्मकत्वात् 'सृष्टिः' नानाभावनिर्मितिः 'सततम्' आत्मतत्त्वसंविदुदयात् 'स्वतन्त्रा स्यात्' वास्तवेन स्वतन्त्रस्वात्ममात्रकर्तृत्वेन अपरामृश्यमाना सती, विचित्रविभ्रमदानस्वच्छन्दा दुर्निवारताहक्सामर्थ्यप्रसरा भवेत्। कस्येव?—'लौकिकस्येव' संसारिणो लोकस्य यथा। इदमत्र तात्पर्यम्—जागरास्वप्नलक्षणं पदद्वयं सर्गस्वभावं, तत्र हि ज्ञानज्ञेयभावेन पारमेश्वर्याः शक्तेः स्थितिः प्रतिपादिता, तादृशि अस्मिन् द्वयात्मके पदद्वये यो योगी यथोक्तसंवित्तिसमाधानापरित्यागात् अप्युत्थितः स्यात्, तस्य सर्वथा स्वतन्त्रे सर्वकर्तरि स्वात्मनि सुव्यवस्थितस्य

पं० ३ क० ख० पु० सर्वगुणेति पाठः।

पं० ४ क० पु० संविदुपायादिति पाठान्तरंच,ख०पु० संविदपायादिति पाठः।

पं० ७ ग० पु० दाने स्वतन्त्रा इति पाठः।

पं० १४ ग० पु० अव्युत्थित इति पाठः।

सृष्टिस्वभावं तत्पदद्वयं शक्तिप्रतिबन्धाय न प्रभवति ; यस्तु अतोऽन्यथा स्यात् स लोकवन्निजयैव भावसृष्ट्या परवशीक्रियते—इति नित्ययुक्तेन योगिना भाव्यमित्यर्थः । तदेतत्

'अन्यथा स्वरूपास्थित्यभावे'

इत्यादिना व्याख्यातमेतद्वृत्तौ ॥ ५ ॥

इदानीमतीतानागतव्यवहितविप्रकृष्टादिवस्तुविज्ञानमनयैव संविदा सुलभम् ,—इति युगलकेनाह

यथा ह्यर्थोऽस्फुटो दृष्टः
सावधानेऽपि चेतसि ।
भूयः स्फुटतरो भाति
स्वबलोद्योगभावितः ॥ ६ ॥

एवं तत्परमार्थेन यत्र येन यथा स्थितम् ।
तत्तथा बलमाक्रम्य न चिरात्संप्रवर्तते ॥ ७ ॥

---

पं० ६ ग० पु० यौगपद्येनेति पाठः ।

'यथा हि' कस्यचित् 'सावधाने' तदर्थादिदृक्षानिविडप्रयत्नेऽपि 'चेतसि' सति, झगिति दृष्टमात्रो 'ऽर्थः अस्फुटः' अप्रकटो 'भाति' प्रथते, 'भूयो'ऽनन्तरं 'स्वबलोद्योगभावितः' स्वस्यात्मनः सर्वज्ञस्य बलं सामर्थ्यं ज्ञत्वादिलक्षणा शक्तिः तया, 'उद्योगः' उद्यमो निविडतरावधानतया दर्शनोत्साहः, तेन 'भावितो' लक्षितः सन् 'स्फुटतरो भाति' प्रत्यभिज्ञायमानानिरवशेषविशेषः सोऽयम् इति प्रथते,—इत्युपमानवाक्यम्। अस्येदं तात्पर्यं—यस्य कस्यचित् द्रष्टुमभीष्टोऽर्थो झगिति विस्फारितमात्रचक्षुषो न सम्यक् दृश्यतामापद्यते, पुनः क्षणान्तरे तद्देशगतस्यैव तथैव न्यक्षानिक्षितात्तस्य स्फुटतरः प्रकाशते, तत्र को हेतुः?—न हि तेन द्रष्टृव्यतिरिक्तं विशेषदर्शनसाधनं किंचिदाश्रयते, तेन तात्त्वि-

---

पं० ५ ग० पु० ज्ञातृत्वादि इति पाठान्तरम्।

पं० १० ख० पु० द्रष्टुर्द्रष्टुमिति पाठः।

पं १३ क० पु० तथेत्यादि, को हेतुरित्यन्तः पाठो नास्ति।

कस्वभावानुप्रवेश एव तस्य संजायते, यद्ब-
लस्पर्शात् तस्य सोऽर्थो याथात्म्येन प्रथते— ;
ततः स्वबलोद्योगमात्रं सर्वार्थप्रकाशनसाधनं
सर्वदेहिनां, नान्यत्किंचित्। एवंविधार्थप्रका-
शनं सर्वप्राणिसाधारणमपि प्रबुद्धस्य योगि-
न एव प्रत्यवमृश्यमानं सत् तथा प्रकाशते,
नान्यस्य मायातिमिरतिरस्कृतसम्यग्दर्शनस्य,-
इति योगी एव अनेन उपदेशेन स्मार्यते 'एवम्'-
इत्याद्युपमेयवाक्योक्तेन। यथा हि अस्फुटदृष्टोऽ-
र्थः स्वबलमेवाक्रम्य स्फुटतरं प्रकाशते, 'एवम्'
अनेनैव उपमानवाक्योक्तेन प्रकारेण 'बलं' स्व-
स्वभावसामर्थ्यम् 'आक्रम्य' दिदृक्षात्क्षणे 'तत्'
अभेदेन अधिष्ठाय, वर्तमानस्य योगिनः 'तथा'
तेनैव तत्तदवस्थाकारदेशकालाद्यविसंवादिना
प्रकारेण 'संप्रवर्तते' सम्यगभिव्यक्तिमेति स-

---

पं ४ ख० पु० एवं चार्थप्रकाशनमिति पाठः।
पं० ६ ग० पु० तदा इति पाठः।
पं० ६ ग० पु० वाक्येत्थेनेति पाठः।

म्यक् ज्ञेयतया अभिमुखीभवति। किं तद्वस्तु?— 'परमार्थेन' तत्त्वतो 'यत्' वस्तु गवादि 'यथा' येन अवस्थात्मना प्रकारेण 'येन' यादृशेन विशिष्टसास्नादिमता आकारेण 'यत्र' यस्मिन् व्यवहितविप्रकृष्टादौ देशे, भूतादौ वा काले 'स्थितं तत्तथा संप्रवर्तत'—इति। अयमत्र भावार्थः—अस्फुटेऽर्थे दृष्टे तस्य स्फुटतरावभासाय सर्वज्ञस्वस्वभावाभेदो यः सर्वस्य कस्यचित् अप्रयत्नेन उत्पद्यते, प्रबुद्धः तत्परामर्शाभ्यासात् देशकालादिव्यवहितानपि यथाभिमतानर्थान् तत्त्वतो जानाति—इत्यबाधितायां युक्तौ स्थितायां सर्वज्ञत्वादिगुणाभिव्यक्तौ अयमेव हेतुः। अत एवोक्तम्

'परिमितविषयमतीतानागतज्ञानं न
किंचिदाश्चर्यं निरावरणस्वस्वभावत्वात्'

इति। तस्यां हि दशायां देशकालाद्यनिरुद्धं स्व-

---

पं० ४ ग० पु० सास्नादिमता कारणेन इति पाठः।
पं० १० ग० पु० तथाभिमतार्थानिति पाठः।

स्वभावबलमभिव्यज्यते। 'अस्फुटोऽर्थो दृष्टः' इत्युपलक्षणार्थमेतन्मन्तव्यम्, तेन श्रुतादिष्वेवमेव योज्यम्। एतेन च दृश्यादेरर्थस्य स्फुटदर्शनाद्यर्थं प्रयत्नविशेषावस्थायां संपाद्यमानेन प्रतिष्ठितस्पन्दानुप्रवेशेन सर्वबुद्ध्यक्षव्यापारात्मकजाग्रदवस्थाश्रयः परतत्त्वोपलब्ध्युपायः प्रसङ्गात् प्रतिपादितो वेदितव्यः व्याख्यातः तद्वृत्तिकृता श्लोकद्वयं पृथक् पृथक्

'यथा किल दूरस्थित'

इत्यादिना,

'तथा तेनैव प्रयत्नविशेषेण'

इत्यादिना ग्रन्थेन ॥६॥७॥

अथैतयैव युक्त्या क्षुत्तृष्णादिजयं प्रतिपादयितुमाह

दुर्बलोऽपि तदाक्रम्य यतः कार्ये प्रवर्तते।
आच्छादयेद्बुभुक्षां च तथा योऽतिबुभुक्षितः ॥ ८ ॥

'यतो' यस्माद्धेतोर्बलं सर्वकर्तृत्वस्वातन्त्र्यलक्ष-

णं सामर्थ्यमात्मीयमाक्रम्य, पूर्वोक्तया युक्त्या तत्राव्यतिरेकेण स्थित्वा 'दुर्बलोऽपि' अपचितदेहधातुत्वात् असमर्थोऽपि सन्, कश्चित् 'कार्ये' भारोद्वहनादिव्यापारे 'प्रवर्तते' क्रियाप्रधानो भवति,—एतत् दृष्टान्तवाक्यम्। अस्येदं तात्पर्यम्—यः परिकृशकायत्वात् अशक्त एव संध्यादिव्यापारमारभमाणः, अभ्यासबलात् विषयान्तरे बलवत्तरेणाप्यशक्यं व्यायामादिकर्म कर्तुं प्रभवति, तस्य तथा सामर्थ्योत्पत्तौ प्राक्प्रतिपादितयुक्त्या स्वस्वभावबलाक्रमणमेकं वर्जयित्वा नान्यत्किंचिन्निमित्तम्। तत्तु यथेष्टसर्वकर्तृत्वलक्षणं बलमात्मतत्त्वस्य, यथायं कर्ता मायाप्रतिबद्धशक्तित्वात् नियतकारणान्तरापेक्षानियतकार्यसंपादनसामर्थ्यं मन्यते। सोऽपीदमहं कर्तुं शक्नोमि—इत्यविकलोत्साहदशायां तदेव बलमवलम्बमानः तत्कार्यसंपादनक्षमो भवति,—इति युक्तियोंगिन एव प्रतिपत्तिगोचरीभवति—इति, तामेतां दृष्टान्ती-

कृत्य तं प्रत्येव इदं दार्ष्टान्तिकवाक्येन उपादिश्यते,—यथा दुर्बलोऽपि बलवत्संपाद्यकार्यसंपादनसमर्थः स्वस्वभावबलाक्रमणादेव भवति, 'तथा' तेनैव प्रकारेण सर्वकार्यसंपादनस्वतन्त्रं स्वबलमाक्रम्य तत् स्वशक्तितया अधिष्ठाय 'योऽतिबुभुक्षितः' अत्यर्थं भोजनेच्छाविष्टः, स तां बुभुक्षाम् 'आच्छादयेत्' स्थगयेत् न्यक्कुर्यात्, नि[illegible]स्वरूपसामर्थ्यप्रथनात् अन्नाद्यभ्यवहारकारणमेव क्षुन्निवृत्त्यादिकार्यम्,—इति नियतिशक्तिप्रतिबन्धाविदलने सति अत्यन्तं तां तिरोभावयेत्, नित्यतृप्त एव स्यादित्यर्थः।

'दुबलः क्षीणधातुरपि'

इत्यादिना व्याख्यातमेतद्वृत्तौ ॥ ८ ॥

एवं पृथक् सर्वज्ञत्वसर्वकर्तृत्वादिगुणाव्य[illegible]गुणारोपण[illegible]: [illegible]तिपाद्य पुनरेकोपपत्तिनिद-

पं० ८ ग० पु० आच्छादनेन न्यक्कुर्यात् इति पाठः ।

पं० ९ ग० पु० अन्नाद्यभ्यवहारेति पाठः ।

र्शनेन ताः प्रतिपादयितुमाह

अनेनाधिष्ठिते देहे यथा सर्वज्ञतादयः ।
तथा स्वात्मन्यधिष्ठानात्सर्वत्रैवं भविष्यति
॥ ९ ॥

'अनेन' आत्मना चेतयित्रा 'अधिष्ठिते' अहमिति प्रातिपत्त्या अध्यासिते 'देहे' शरीरे 'सर्वज्ञतादयः' शरीराश्रयाणि सर्वाणि ज्ञेयानि कार्याणि च, तेषु ज्ञता ज्ञातृत्वमादिर्येषां तान्येव कर्तृत्वादयो धर्माः 'यथा' सर्वस्य स्थिता —इति दृष्टान्तवाक्यम्। अस्येदं तात्पर्यम्—यद्यदयमात्मा अहमिति-प्रातिपत्त्या आधितिष्ठति तत्तदस्य शरीरम्, तदाश्रयं च सर्वमयं स्थूलं सूक्ष्मं वा ज्ञेयं कार्यं च जानाति च करोति च—इत्यनेन निदर्शनेन 'तथैव' तेनैव प्रकारेण अहंतया देहाधिष्ठानवत् 'स्वात्मनि' स्वस्वभावे 'न दुःखं न सुखं यत्र' इत्यादिनोक्तलक्षणे देहादिव्यतिरिक्तविशुद्धाद्वयाचिन्मात्रवपुषि 'अधिष्ठानात्' अहंतया अध्यासनात्, एवं शरीरा-

ञयसमस्तज्ञेयकार्यवस्तु ज्ञातृत्वादिवत् 'सर्वत्र' सकलेष्वपि भुवनेषु, योगिनः सर्वज्ञतादयो भविष्यन्ति अवश्यमभिव्यक्तिं यास्यन्ति; परस्परव्यतिरिक्त-देहमात्राहंभावलक्षण-प्रतिबन्धभङ्गाद् अद्वयाचिन्मात्रस्वात्मप्रतिष्ठिताहंकारस्य योगिनो निर्विघ्नाः सर्वज्ञतादयः सर्वत्र अभिव्यज्यन्त एव इत्यर्थः ।

'अनेन आत्मस्वभावेन'

इत्यादिना व्याख्यातमेतत् वृत्तौ ॥ ९ ॥

एवं व्याधिवलीपलिताद्युच्छेदाय उपपत्तिमाह

ग्लानिर्विलुण्ठिका देहे
तस्याश्चाज्ञानतः सृतिः ।
तदुन्मेषविलुप्तं चे-
त्कुतः सा स्यादहेतुका ॥ १० ॥

'ग्लानिः' मान्द्यादिजनिता हर्षहानिः, सा 'देहे' शरीरे 'विलुण्ठिका' धातुबलवर्णतेजःशक्त्यादीनां हठेन हर्त्री; 'तस्याश्चाज्ञानतः' प्रति-

---

मं० १० ख० पु० इदानीं व्याधिवलीति पाठः ।

पादितत्त्वावगमाभावात् 'स्मृतिः' स्मरणं प्रवृत्तिः; 'नतु' अज्ञानम् 'उन्मेषविलुप्तं चेत्' उन्मेषेण वक्ष्यमाणेन स्वभावालोकविकासेन, विलुप्तं विच्छिन्नं निर्मूलतां नीतं यदि, तदा असौ ग्लानिः 'अहेतुका' कारणरहिता 'कुतो भवेत्' न भवेदेव, निर्निमित्तस्य उत्पादाभावात्; अज्ञानं नाम जन्म-परिणाम-विवृद्धि-क्षय-विनाशात्मकविकारविरहितनित्यनिर्विकारस्वस्वभावाप्रत्यभिज्ञानात् जन्मादिविकाराधिकरणे कलेवरादौ आत्माभिमानः, यस्मिंश्च सति अप्रबुद्धो जनः तद्विकारान् जन्मादीन् आत्मनि आरोपयन् ग्लान्या विलुण्ट्यते। यस्तु वक्ष्यमाणोन्मेषपरिशीलनाद् आविर्भूतसत्यात्मप्रत्ययः तस्य कुतः ग्लानिः,—इति मुख्यं फलं सहजानन्दहानिरूपा-

---

पं० ३ ख० पु० स्वभावावलोकेति पाठः।

पं० ४ ग० पु० तदसाविति पाठः।

पं० ५ क० ग० पु० कुतो भवेदेव, निर्निमित्तस्येति पाठः।

पं० १० ख० पु० तस्मिन्सति इति पाठः।

या ग्लानेरभावः; गौणस्तु वलीपलिताद्यभावः, यतः तदा कुतः सा ग्लानिः कारणरहिता भवेत्,—इति व्याख्याय पुनर्वृत्तिकृता व्याख्यातम्

'अनेनैव कारणेन वलीपलिताभावः शरीरदार्ढ्यं च योगिनाम्'

इति ॥ १० ॥

अथ उन्मेषस्य ग्लानिकारणभूताज्ञानविनाशहेतोः स्वरूपप्रतिपादनाय आह

**एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।**
**उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥ ११ ॥**

'स तु' स पुनरुन्मेषः स्वस्वभावाभासविकासो 'विज्ञेयो' बोद्धव्यो लक्षणीयः । कोऽसौ?—'एकचिन्ताप्रसक्तस्य' एकस्यां चिन्तायां दृश्यमान-स्मर्यमाणतत्तद्वस्तूपरक्ते ज्ञाने प्रसक्तस्य, एकाग्रस्य चिन्तयितुः 'यतो' यस्मात् चिन्त्याभासानुपरक्तज्ञानात्मनः स्वस्वभावप्रकाशात् कार-

---

पं० १२ ख० पु० उन्मेषः स्वभावावभासेति पाठः ।

णभूतात् 'अपरस्याः' चिन्तायाः ग्राह्यालम्बिनो ज्ञानान्तरस्य 'उदयः' उत्पत्तिः 'स्यात्'। तं च योगी 'स्वयं' आत्मनैव 'उपलक्षयेत्'– परमार्थ-परमेश्वरः सर्वतो विविक्तः परमकारणं परमात्मा अयमहमस्मि– इति प्रतिपद्येत। नहि तस्य शब्दादिवत् इदन्तया स्वरूपमुपलक्षयितुं शक्यं,– स्वसंवेदनसंविदितस्वभावत्वात्। तस्यैवंविधस्य नित्योदितस्यापि उपदेश्यं प्रति तदानीमेव अभिव्यज्यमानत्वात् उन्मेषशब्देन व्यपदेशः कृतः। यस्त्वेवं मन्यते–यस्यां चिन्तायां सत्याम् अपराचिन्तोदयः सा चिन्तैव चिन्तान्तरकारणं नान्तरालवर्ति वस्त्वन्तरं विद्यते, यच्चिन्ताद्वयस्वरूपव्यतिरेकेण उपलक्षणीयात्मकं द्वितीयचिन्ताकारणं स्यात्–इति, तं प्रति कारणभावेन कार्यभावेन च अभिमतस्य पूर्वापरीभूतस्य चिन्ताद्वयस्य एष संबन्धो न सिद्ध्यति, अनुसंधातारं तृतीयं विना। पूर्वं कारणम्

पं० १ ख० पु० ग्राह्यावलम्बिन इति पाठः।

अपरा च कार्यभूता चिन्ता,—इति योऽनुसंधत्ते, यश्चासौ अनपह्नवनीयोऽनुसंधाता सोऽनुसंधेयचिन्ताद्वयव्यापकविशुद्धचिन्मात्रस्वरूपः सर्वकारणमात्मैवोन्मेष इत्युक्तः। अत एव वृत्तिकृता व्याख्यातम्

'चिन्ताद्वयान्ते व्यापकतया अनुभूयमानः'

इत्यादिना ॥ ११ ॥

इदानीं तत्तत्साधनविशेषाभिनिविष्टानां योगिनां प्रायेण याः प्राप्यफलतया अभीष्टाः सिद्धयः ता एतदुपासायोगिनो विघ्नपरम्परा एव, इत्युन्मेषाभ्यासप्रभावं प्रतिपादयितुमाह

**अतो बिन्दुरतो नादो रूपमस्मादतो रसः।**
**प्रवर्तन्तेऽचिरेणैव क्षोभकत्वेन देहिनः**
**॥ १२ ॥**

'अतः' अस्मात् प्रतिपादितस्वरूपात् उन्मेषात्, जागराद्यवस्थागतसुखदुःखाद्यनुभवदशासु अविलुप्तेन अवधानेन, प्रतिक्षणविनश्वर-

---

प० १४ क० पु० अत इति मौलं पदं नास्ति।

विचित्रपरतन्त्रतुच्छरूपात् वेद्यवस्तुनो वैधर्म्ये- ण भाव्यमानात् सर्वकारणभूतात् 'अचिरेण' अल्पेन कालेन, एतानि सिद्धचिह्नानि, चोभ- कत्वेन संतोष-स्मयाभिमानादिभिः चित्तव्यु- त्थापकत्वेन 'देहिनो' नितरामनुन्मूलितदेहाद्य- हंप्रत्ययस्य योगिनः 'प्रवर्तन्ते' प्रादुर्भवन्ति । कानि तानि?– 'बिन्दुः' भ्रूमध्यादौ प्रदेशे ध्या- नाभ्यासप्रकर्षप्रवर्धमानोत्तरोत्तरप्रसादस्तेजो- विशेषो, यो बिन्दुभेदाभ्यासात् धरातत्त्वध्या- यिनामभिव्यज्यते। तथा–'नादो' वेगवन्नद्यो- घनिर्घोषघनोपक्रमः क्रमसूक्ष्मीभावाभिव्यज्य- मानमधुमत्तमधुकरध्वनितानुकारी स्वोच्चरितो ध्वनिविशेषो, यं व्योमतत्त्वाभ्यासिनः शृण्वन्ति। तथा–'रूपं' सन्तमसाद्यावरणेऽपि साति तत्तद्- दृश्यवस्त्वाकारदर्शनं, यत् तेजस्तत्त्वन्यच्चानि-

(१) न्यक्षेण कार्त्स्न्येनेत्यर्थः।

पं० ३ ख० पु० अल्पेनाल्पीयसा इति पाठः।

पं० ४ ख० पु० चिन्ताव्युत्थापकेनेति पाठः।

पं० ६ ख० पु० धरातत्त्वव्यापिनामिति पाठः।

च्चित्समतयो निरीक्षन्ते। तथा—'रसो' रसवद्वस्तुविरहेऽपि अमृतास्वादो मुखे, लोलाग्र[2]लम्बिका[3]दिधारणानिरतैः अप्तत्त्वध्यायिभिर्य उपलभ्यते; पवनतत्त्वध्यायिनां स्पर्शविशेषोऽपि योऽभिव्यज्यते सोऽपि अस्मात् प्रवर्तत,—इति अत्र द्रष्टव्यम्। इदमत्र तात्पर्यम्—उन्मेषाभ्यासयोगिना तत्तद्धारणाद्यभ्यासचिरलभ्यास्वपि अचिरप्राप्यासु एतासु उपलब्धिषु संतोषिणा न भाव्यम्,—निरुत्तरपदारोहप्रत्यूहभूतत्वादासाम्। एताश्चेतरयोगिनां क्रमभाविन्योऽपि उन्मेषाभ्यासयोगिनां तदाभिसंधिविरहात् अक्रमेणापि प्रवर्तन्ते इति तथैव निर्दिष्टाः। व्याख्यातमेतत्

'अतोऽस्मात् उन्मेषात्'

इत्यादिना वृत्तौ ॥ १२ ॥

(२) लोलाग्रं जिह्वामूलम्। (३) लम्बिका तालुरन्ध्रम्।

पं० ५ ख० पु० 'तथा' शब्दो नास्ति।

पं० ११ ख० पु० अभिसंधीति तदभिप्रायेति पर्यायोपेतः पाठः।

एवम् उन्मेषोपदेशेन आत्मनो देहादिवैलक्षण्यव्यतिरिक्तस्वरूपतां प्राक् बहुभिः प्रकारैः प्रतिपादितां संग्रहेण प्रतिपाद्य, इदानीं तथैव तस्य सकललोकस्वानुभवसिद्धं व्यवहारं प्रदर्शनीकृत्य विश्वरूपतां संक्षेपतः प्रतिपादयन् समस्तप्रकरणार्थतात्पर्यमाह

**दिदृक्षयेव सर्वार्थान्यदा व्याप्यावतिष्ठते ।**
**तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते ॥ १३ ॥**

'यदा' यस्मिन् काले, साधको 'दिदृक्षयेव' द्रष्टुमिच्छया यथा 'सर्वार्थान्' अखिलान् प्रमेयपदवीजुषो भावान् 'व्याप्य' स्वसंवित्प्रकाशेन आच्छाद्य, तदन्तर्लीनान् कृत्वा 'अवतिष्ठते' नानात्वदर्शनभ्रान्तिनिवृत्तेरेकत्र तत्त्वे विश्राम्यति; 'तदा' तस्यां दशायां यत्फलमनुभूयते तत्र 'बहुना' भूयसा 'उक्तेन' फलाभिधानेन 'किं'?

पं० ४ ख० पु० अनुभवप्रसिद्धमिति पाठः ।
पं० ८ 'स्वयं तदवभोत्स्यते' इतीत्थमेवात्र मूलपाठः समुचितः प्रतिभाति तथैव व्याख्यातत्वात् ।

तत्प्रतिपादनेच्छया ग्रन्थसहस्राण्यपि उक्तानि निरर्थकानि भवन्ति, तस्य वचनगोचरातीतत्वात्, अत आह 'स्वयं तदवभोत्स्यते' इति, ननु तादृशं फलं, स्वयमात्मनैव, व्यतिरिक्तसाधननिरपेक्षेण प्रतिपत्स्यते अभियुक्तः, स्वसंवेद्यत्वात् तस्य । इदमत्र तात्पर्यम्,—योगिना सर्वभावानां स्वस्वभावाव्यतिरेकजिज्ञासुना स्वानुभूता दिदृक्षावस्था निदर्शनीकार्या, तथा हि— द्रष्टुमभीष्टा भावाः स्वस्वभावाभेदेन व्यवतिष्ठन्ते, भावभेदहेतोरिदन्ताप्रत्ययस्य अनुन्मेषात्, तदा यथा दिदृक्षावस्थायां क्षेत्रज्ञस्वभावादभेदः तद्दिदृक्षितानां भावानां, तथा परमात्मस्वभावात् अखिलजगद्भावानामभेद एव,—इति पूर्वोपदिष्टव्यतिरिक्तात्मस्वरूपोपलब्धिपरामर्शाभ्यासात् उन्मिषितदिदृक्षाक्षणोपलक्षणक्षमाविज्ञानचक्षुषं योगिनं प्रत्येव अयमुपदेशः; मायाशक्तिजनितेन हि विकल्पतिमिरेण तिरस्कृतसम्यग्ज्ञानदृश एकत्वेव निर्विभागचिन्मात्रस्वरूप-

मात्मतत्त्वं प्रमातृभेदेन प्रमेयभेदेन च नानारूपं पश्यन्तो दिदृक्षितदृश्यमानदृष्टाद्यवस्थाविभागं भावानां परिकल्प्य, दिदृक्षितानामपि तेषां जीवस्वभावादभेदं वस्तुसन्तमेव परामष्टुमशक्ताः, कुतो जगद्भावानां परमात्मस्वभावानाम् अभेदं प्रतिपद्येरन्, तदा योगिनैव दृष्टान्तीकृतस्वदिदृक्षालक्षणपरामर्शदिशा स्वस्वभावाभेदमखिलभुवनभावाभासानां भावयता भेदध्वान्तनिर्भेदभास्करेण भवितव्यम्—। व्याख्यातमेतत्

'दिदृक्षा द्रष्टुमिच्छा तदवस्थास्थ इव'

इत्यादिना वृत्तौ ॥ १३ ॥

एनमेव उपदेशं द्रढयितुमाह

---

पं० १ ख० पु० प्रमातृप्रमेयभेदेनेति समस्तः पाठः।

प० २ ख० पु० दृश्यमानद्रष्ट्रादीति, दृश्यमानदृश्यादीति पाठान्तरोपेतश्च पाठः।

पं० ४ ग० पु० वस्तुतः सन्तमिति पाठः।

पं० ६ ख० पु० तदा यदि नैवेति पाठः।

पं० १२ क० ग० पु० एवमेवोपदेशमिति पाठः।

प्रबुद्धः सर्वदा तिष्ठे-
ज्ज्ञानेनालोच्य गोचरम् ।
एकत्रारोपयेत्सर्वं
ततोऽन्येन न पीड्यते ॥ १४ ॥

'सर्वदा' सर्वासु अनुभवदशासु 'प्रबुद्धस्तिष्ठेत्' प्रतिपादितोपदेशाभ्यासपरत्वात् अनिमीलितसम्यग्ज्ञानदृष्टिः जाग्रदेव आसीत। कथं?— 'ज्ञानेन' संवेदनेन 'गोचरं' विषयम् 'आलोच्य' परिच्छेद्य, तथारूपतया निश्चित्य 'एकत्र' ज्ञातरि स्वात्मनि 'सर्वं' परिच्छेद्यम् 'आरोपयेत्' अर्पयेत्, तदभिन्नतया प्रतिपद्येत इत्यर्थः । 'ततश्च' सर्वभावानामेकप्रमातृस्वरूपाभेदप्रतिपत्तिरूपात् आरोपणात् 'अन्येन' व्यतिरिक्ततया अवभासमानेन प्रमेयेण, वक्ष्यमाणेन कलाद्यात्मकेन भावजातेन 'न पीड्यते' विनश्वरभावाहंभावप्रतिपत्त्यादिना पाशेन संसारचक्रे निबध्य न कदर्थ्यते । इदमत्र तात्पर्यम्,— यं

यमर्थं रूपादिकं चक्षुरादिज्ञानेन प्रमाता आलोचयति निश्चिनोति, स स निश्चयावस्थायां प्रमातृरूपात् अभिन्न एव भवति; निश्चितत्वं हि नाम वस्तुनः प्रकाशमानत्वं, तच्च प्रकाशमानत्वादाभिन्नमेव, नान्यद्भवितुमर्हति, प्रकाशव्यतिरिक्तत्वे तस्य प्रकाशमानतानुपपत्तेः। एवं निश्चयावस्थायां प्रकाशमात्रस्वरूपप्रमात्रभेदः सर्वभावानां स्वभावासिद्धः, तत एवंविधो ग्राह्यग्रहीतृग्रहणसंबन्धः स्थितोऽपि अपरामृश्यमानो नानात्वमोहजालेन बध्नाति सर्वजन्तून्, अतः सर्वावस्थासु अविरतपरामर्शो भवेत्, येनैकप्रमातृपरमार्थत्वं जगद्भावानां प्रतिपन्नः सन् पुनः संसारी न स्यात्। तदेवं 'प्रबुद्धः सर्वदा तिष्ठेत्' इत्युक्तम्।

'प्रबुद्धोऽसंकुचितशक्तिः

इत्यादिना व्याख्यातमेतत् वृत्तौ ॥ १४ ॥

---

पं० ६ ख० पु० प्रकाशमानतापत्तेरिति पाठः।

पं० १० क० पु० नानातममोहजालेनेति पाठः।

इदानीमेवं स्वयं संव्यवस्थितः स्वात्मैव परमेश्वरः एकः पदार्थः सन् निजयैव मायाशक्त्या प्रतिपशु भेदेन आत्मानमवभासयन् क्रीडति—इति तत्त्वतो द्वितीयपदार्थाभावमेव समर्थयमानः पशुस्वरूपप्रतिपादनद्वारेण शक्तिप्रसरक्रीडामेव अस्य प्रतिपादयितुमाह

शब्दराशिसमुत्थस्य
शक्तिवर्गस्य भोग्यताम् ।
कलाविलुप्तविभवो
गतः सन् स पशुः स्मृतः ॥१५॥

'स' इयता प्रबन्धेन प्रतिपादयितव्यस्वरूप आत्मैव ईश्वरो, वक्ष्यमाणेन हेतुना पराधीनसर्ववृत्तित्वेन अनवभासितात्मा 'पशुः' तिर्यक्प्रायः 'स्मृतः' अनादित्वात् संसारक्रीडाव्यवहारस्य सदा स्मर्यमाणत्वेन स्थितः । कीदृशः सन्?—'शब्दराशिसमुत्थस्य शक्तिवर्गस्य

पं० २ ख० ग० पु० मायाशक्त्या पतिपशुभेदेनेति पाठः ।
पं० ११ ख० पु० प्रतिपादितस्वरूप इति पाठः ।

कलाविलुप्तविभवो भोग्यतां गतः सन्' पारमे-श्वर्याः शक्तेः व[?]ग्र[?]ा[?]णवाश्रूपप्रसराभिप्रायेण आदि-क्षान्तवर्णसमुदायात्मिक[ाया] स्तद्वि-परीतं .... .... .... .... .... .... (१)
.... .... .... .... .... .... .... ....

पराम्र्तरसापायस्तस्य यः प्रत्ययोद्भवः ।
तेनास्वतन्त्रतामेति स च तन्मात्रगोचरः
॥ १६ ॥

(१) 'विपरीतम्' इत्यतोऽनन्तरमस्य श्लोकस्यावशिष्टव्याख्याभागो यावत्समस्तमूलादर्शपुस्तकेषु विनष्टसत्तया त्रुटितोऽस्ति । अतः इदं व्याख्यानं पद्यार्थाभिज्ञानाय स्पन्दप्रदीपिकाग्रन्थात् प्रक्षिप्योपन्यस्यते—

शब्दानां राशिः 'शब्दराशिः' वर्णसमूहः, मातृका अकारादि क्षकारान्ता शब्दजननी वर्णात्मकत्वात् शब्दानाम्, 'तत्समुत्थस्य' कादिवर्गात्मकस्य ब्राह्म्यादिशक्तिचक्रस्य 'कलाभिः' ककाराद्यक्षरैः 'विलुप्तविभवः' हृतमहाव्याप्तिः स्वस्वभावात्प्रच्यावितः अत एवास्य 'भोग्यतां गतः सन्' पुरुषः 'पशुः' उच्यते अज्ञत्वात् । उक्तं च ईश्वरप्रत्यभिज्ञायाम्

'स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः ।
मायातो भेदिषु क्लेशकर्मादिकलुषः पशुः ॥'

इति । अन्यत्रापि

भेदग्रन्थिविभङ्गे हि कर्मात्मैक्यं प्रपद्यते ।
सोऽविज्ञातः पशुः प्रोक्तो विज्ञातः पतिरेव सः ।'

इति ॥ १२॥

.... .... .... .... .... (१)

'अस्वतन्त्रो' व्यतिरिक्तसाधनसामग्र्यपेक्षसकलसमीहितार्थः पुमान् तद्भावमापद्यते, जागरस्वप्नसुषुप्तावस्थोपमेयसकल-विज्ञानाकल-प्रलयकेवलाख्यभेदत्रययोगी सहजादिमलत्रयावृतः पशुर्भवति इत्यर्थः। यतस्तस्य प्रत्ययोद्भव एव 'परामृतरसापायः' परम् अनुत्तरम् अमृतमविनाशि अद्वयचिन्मयं शिवाख्यं स्वरूपं तस्य 'रसः' तथाप्रत्यवमर्शात्मक आस्वादः, तस्मात् 'अपायः' पृथग्भावोऽन्यथावृत्तिः इदमित्यादि-

(१) 'परामृतेति' अस्य पद्यस्यापि 'अस्वतन्त्र' इत्यन्त आद्यव्याख्याभागः समस्तमूलादर्शपुस्तकेषु पूर्वपद्यव्याख्याभागवद्विनष्टसत्तया त्रुटितोऽस्ति। अतोऽस्य पद्यस्याप्यर्थज्ञापकं व्याख्यानं स्पन्दप्रदीपिकाग्रन्थादेव प्रक्षिप्य उपन्यस्यते—

'तस्य' च पशोर्यः 'प्रत्ययोद्भवः' श्रोत्रादिद्वारेण विषयदर्शने स्मरणादिज्ञानोत्पत्तिः, स एव 'परामृतरसात्' स्वरूपोदयात् 'अपायः' प्रच्युतिः यतः 'स' प्रमान् तेनास्वतन्त्रतां पारतन्त्र्यम् असर्वगतादिम् 'गति' प्राप्नोति, स च 'प्रत्ययोद्भवः तन्मात्रगोचरः' शब्दादिविषयाविषयः तदभिलाषात्मक इत्यर्थः॥ १६॥

पं० ३ ग० पु० विज्ञानप्रलयाकलेति पाठः।

पं० ४ क० पु० प्रलयोद्भव एवेति पाठ।

विकल्परूपः। इदमत्र वाक्ये गर्भीकृतम्—एकस्यैव परस्य तत्त्वस्य स्वेच्छापरिकल्पितानुग्राह्यानुग्राहकभावविविक्तात्मनोऽनुग्राह्योपायार्थं, तथैव स्वेच्छया परिकल्पिताशिवशक्तिसदाशिवेश्वरविद्यात्मकविभागाभासस्य प्रक्रियाशास्त्रेषु यत् पञ्चरूपत्वं व्यवस्थितं, तत् परामृतशब्देन रसशब्देन च संग्रहेण उक्तम्। तथा च—अहमित्येव अत्यन्तभेदसंस्पर्शशून्यपरमाशिवाख्यस्वभाववाचकत्वेन परामृतशब्दः, तत्परामर्शरूपशक्तितत्त्ववाचकत्वेन च रसशब्दः अत्यन्तप्रशान्तानिष्परामर्शशून्यप्रायाशिवतत्त्ववादिमतनिरासार्थं यः प्रयुक्तः स पूर्वं व्याख्यात एव; तदेवं तत्त्वद्वयं शिवशक्त्याख्यं, यदभिन्नमपि स्वरूपप्रतिपादनान्यथानुपपत्त्या विभज्य तत्त्व-

---

पं० ६ ख० पु० पञ्चरूपत्वं स्थितमिति पाठः।

पं० ७ ख० पु० संगृह्य उक्तमिति पाठः।

पं० ९ ग० पु० परामर्शरूपः शक्तीति पाठः।

पं० १२ ग० पु० स एवं व्याख्याततत्त्वेति पाठः।

विद्भिः प्रकाश्यते । तथा च तत्त्वगर्भस्तोत्रे गुरुभिः सततमविलुप्तोपलब्धृत्वलक्षणस्वधर्मरूपायाः शक्तेः प्राधान्यप्रतिपादनाभिप्रायेण शिवतत्त्वमेवमस्तूयत ।

'यस्या निरुपधिज्योतीरूपायाः शिवसंज्ञया ।
व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे ॥'

इति । शक्तितत्त्वं च विदितपरमार्थैः स्वरूपप्रत्यवमर्शसामान्यस्पन्दादिसंज्ञाभिः व्यवह्रियमाणं तत्पर्यायभूतोन्मेषादिपदाभिधेयतया प्रतिपादितम् । यदुक्तम्

'किंचिदुच्छूनतापत्तेरुन्मेषादिपदाभिधाः ।
प्रवर्तन्ते त्वयि शिवे शक्तिता ते यदाम्बिके ॥'

इति । न च यदाशब्दश्रुतिभ्रमात् कदाचिदेषा शक्त्यवस्था भवति, कदाचिन्न भवति इति मन्तव्यम्; यतः स्वभावसंवेदनात्मको नित्यः सामान्यस्पन्दरूप एव धर्मः किंचिदुच्छूनता इत्यु-

पं० ४ ख० पु० तत्त्वं स्तूयते इति पाठः ।

पं० ८ ख० पु० स्पन्दादिभिर्व्यवह्रियमाणं तात्पर्यभूतोन्मेषादीति पाठः ।

क्तम् । ततः परं सदाशिवेश्वरविद्याख्यं तत्त्वत्रयमपि परामृतशब्दवाच्यमेव; यतः परमेश्वरस्य परमार्थतः एकत्वेऽपि अत्यद्भुतस्वैश्वर्यवीर्येण विशुद्धचिन्मात्ररूपतया विश्वात्मकत्वेन च अन्तर्बहीरूपं द्वैविध्यं यदवस्थितम्, तत्र विश्वात्मकस्य बाह्यस्य रूपस्य ज्ञेयकार्यभावेन लब्धस्वरूपत्वात् एकापि तच्छक्तिः ज्ञानक्रियारूपतया द्वित्वेन उपचर्यते । तच्च ज्ञानक्रियात्मकत्वं यत्र बहिरगृहीतोन्मेषमन्तः साम्येनैवावतिष्ठते त्रैगुण्यमिव अव्यक्तावस्थायां, सा परमेश्वरभोगात्मकज्ञानक्रियारूपत्वेऽपि अन्तर्मुखत्वात् निमेषात्मिका सदाशिवदशा । यत्र पुनः शक्तेः क्रियाप्राधान्येन बहिर्गृहीतोन्मेषायाः पराहंभावविश्रान्तिः सा ईश्वरदशा । यस्यां पुनर्ज्ञानशक्त्युद्रेकेण अस्या बहिर्मुखत्वं बाह्याभ्यन्तररूपसामानाधिकरण्यपर्यवसायित्वात् स्वरूपवि-

पं० १० ख० पु० पारमेश्वरभोगेति पाठः ।

पं० १५ ख० पु० बहिर्मुखबाह्याभ्यन्तरेति पाठः ।

भ्रान्तिनिष्ठत्वमेव सा विद्यादशा इति । तिसृ-
ष्वपि एतासु दशासु भेदप्रतिपत्तिमूलत्वात् ल-
ब्धात्मिकापि मायाशक्तिः परस्याः संविदः सर्वा-
पूरकपरिपूर्णाहंकारलक्षणे स्वभावे एव विश्रा-
न्तत्वात् प्रत्यस्तमिता सती परमानन्दनिर्भर-
शिवरूपं तिरोधातुं नालम् ,इति पदत्रयमेतत्प-
रामृतमेव । यदुक्तं तत्त्वगर्भ एव

'ज्ञानक्रियास्वरूपेण प्रवृत्तायास्तु ते शिवे ।
सदाशिवत्वं जगदुर्भोगाङ्गं तत्त्ववेदिनः ॥
गुणीभूतज्ञशक्तिस्त्वं व्यक्तीभूतक्रियात्मिका ।
यदा तदैश्वरं तत्त्वं व्यक्ततामेति वृत्तिमत् ॥
प्रवृत्तावुन्मुखीभूता भवेस्त्वं परमे यदा ।
ज्ञानशक्तिस्तदोदारा विद्या त्वं परिगीयसे ॥'

इति । तथा ईश्वरप्रत्यभिज्ञायाम्

'एवमन्तर्बहिर्वृत्तिः क्रिया कालक्रमानुगा ।
मातुरेव तदन्योन्यावियुक्ते ज्ञानकर्मणी ॥

---

पं० २ ख० पु० भेदप्रत्ययमूलत्वादिति पाठः ।
पं० ६ ख० पु० पदत्रयमेवैतत्परामृतरूपमेवेति पाठः ।
पं० १६ ख० पु० सान्तरेवेति पाठः ।

किं त्वान्तरदशोद्रेकात्सादाख्यं तत्त्वमादितः ।
बहिर्भावपरत्वे तु परतः पारमेश्वरम् ॥
ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः ।
सामानाधिकरण्यं च सद्विद्याहमिदंधियोः ॥
इदंभावोपपन्नानां वेद्यभूमिमुपेयुषाम् ।
भावानां बोधसारत्वाद्यथावस्त्ववलोकनात् ॥'

इति। ततः परं तु परस्परपरिहारावस्थिताहंप्रतीतिलक्षणभिन्नविषयापेक्षिणि नानाभेदनियतात्माभिमानत्वात् तात्त्विकस्वैश्वर्यानभिज्ञे क्षेत्रज्ञतत्त्वे मायाशक्तिरेव केवला प्रभोर्विश्वरूपैश्वर्यप्रथास्पदभूता विजृम्भते । यथोक्तं तत्त्वगर्भे एव

'यदा त्वेवंविधादत्र निजा भोगाज्ञता पशोः ।
तदा मायास्वरूपेति गीयसे वैभवाश्रयः ॥'

इति । प्रत्यभिज्ञायामपि

पं० १ ख० पु० दशोद्रेके सादेति पाठः ।
पं० २ ख० पु० परतः परमेश्वर इति पाठः ।
पं० ४ ख० पु० इदं द्वयोरिति पाठः ।
पं० १३ ग० पु० एवंविधा चात्रेति पाठः ।
पं० १४ ग० पु० स्वरूपेति ज्ञायसे इति पाठः ।

'भेदे त्वेकरसे भातेऽहंतयानात्मनीक्षिते।
शून्ये बुद्धौ शरीरे वा मायाशक्तिर्विजृम्भते ॥'

इति। सा इह प्रत्ययोद्भवशब्देन प्रतिपादिता, यतोऽहमित्येव शिवात्मकस्य स्वभावस्य परामर्शात्मकं सम्यक् ज्ञानं, तस्यैव च स्वभावस्य विश्वरूपतया अवभासमानस्य इदन्तोल्लेखने भेदोद्भावनसामर्थ्यं मायाख्या शक्तिराख्याता, न तु वस्त्वन्तरं किंचित्। इदमिति च परामृश्यमानोऽर्थः प्रकाशमानत्वमतिक्रम्य अन्यथाभवितुं यतो न शक्नोति ततो भेदरूपापि असौ माया प्रकाशात्मकपारमेश्वरधर्मत्वानतिक्रमात् भगवतः शक्तिरेव इयमत्यद्भुता, यत् स्वरूपं स एव एवं प्रत्यपादयत्।

'दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥'

इति। तथाहि अत्रायमर्थः—एषा मम दैवी माया, देवस्य इत्थंक्रीडनैकरसस्य ईश्वरस्य

---

पं० ६ ख० पु० स्वस्यभावस्येति, इदतोल्लेखभेदभावनेति च पाठः।
पं० १७ क० पु० क्रीडनकैकरसस्येति, ख० पु० क्रीडैकरसस्येति पाठः।

सतः शक्तित्वेन संबन्धिनी; किंस्वरूपा ?— गुणमयी, गुणाः सुखाद्यात्मानः सत्त्वाद्यभिधानाः तत्प्रकृतिका ; सा हि भेदावभासस्वभावा, भिन्नश्चार्थः शब्दादिविषयात्मकः, विषयश्च सुखादिसंवेदनपर्यवसितात्मा,—इति सुखादिरूपग्राह्याकारनिर्भासिनी माया गुणमयी इत्युक्ता। तथा दुरत्यया दुःखेन अत्येतुं शक्या, तदतिक्रमणे कृतोत्साहैः प्रबुद्धैरपि सपदि सकलसंसारव्यवस्थोच्छेदानुपपत्तेः भेदव्यवहारस्य दुर्लङ्घ्यत्वात्। किं तु मामेव ये प्रपद्यन्ते छिन्नद्वैतदशाप्रतिष्ठितसंविदः सुप्रबुद्धाः सन्तो मामेवैकं तत्त्वमभेदेनात्मतया प्रत्यभिजानते, ते मद्भावमापन्ना एनामतितरन्ति। तस्यां हि दशायां दिवसद्युताविव द्योतमानायाम् इयं यामिनीव निर्मूलनष्टस्वरूपा तैरेवातिक्रान्ता

---

पं० ८ ख० पु० क्रमणे नित्योत्साहैरिति पाठः।

पं० ११ ख० पु० द्वैतदशाः प्रतिष्ठितेनेति पाठः।

पं० १३ ख० पु० तस्यां व्यवस्थायामिति पाठः।

भवति । यदुक्तं स्तोत्रे

'समाधिवज्रेणाप्यन्यैरभेद्यो भेदभूधरः ।
परामृष्टश्च नष्टश्च त्वद्भक्तिबलशालिभिः ॥'

एवंप्रत्ययोद्भवमात्रं माया, तन्मूलं च क्षेत्रज्ञतत्त्वं पशुपर्यायेण अस्वतन्त्रशब्देनात्र प्रतिपादितम् । प्रत्ययोद्भवरूपया हि अनया मायया स्वभावात् प्रच्यावितस्य अस्य तद्धर्मविपरीतेन कलादिरूपेण सुप्रसवेन पाशपञ्चकेन ग्रथितस्य पारतन्त्र्यं पशुत्वमुद्घाट्यते । तथा च—अयम् अनया व्यामोहितः अनवच्छिन्नत्वादिरूपं स्वधर्मम् अपरामृशन्, तद्विपरीतेन अवच्छेदकेन कलनात्मना भूतभविष्यदादिविकल्पविभक्तेन कालाख्येन, तथा सर्वात्मकत्वधर्मविस्मृतेः सर्वत्र नियतकार्यकारणभावाख्यात्मकेन नियतिनाम्ना, तथा सर्वकर्तृत्वसर्वज्ञत्वलक्षण धर्मद्वयौदासीन्यात् किंचित्कर्तृत्व-किंचिज्ज्ञत्व

पं० ४ ख० पु क्षेत्रज्ञत्वमिति पाठः

पं० ११ ख पु० अवच्छेदककलनेति समस्तः पाठः ।

रूपाभ्यां कलाविद्याभिधानाभ्यां, तथा प्रेप्सितार्थविरहात् नित्यनिरभिलाषत्वलक्षणस्वधर्मापरामर्शात् विषयाभिलाषितारूपेण रागाख्येन च पाशेन बध्यमानः पराधीनवृत्तिः पशुः संबध्यते। एष च मायाशक्तेः पञ्चभेदः प्रसवः समस्तस्य पशुप्रबन्धस्य अविशेषेण स्वरूपमावृत्य व्यवस्थितः। यस्तु प्रतिप्राणि विचित्रबुद्ध्यादिरूपतया परिणमन् तमावृणोति, तस्य प्रधानाख्यस्य प्रसवस्य प्रपञ्चं प्रत्ययोद्भवविषयप्रतिपादनद्वारेणाह 'स च तन्मात्रगोचरः' इति, स च पशुत्वकारणं प्रत्ययोद्भवः, तन्मात्रगोचरः तन्मात्राणि शब्दादिसामान्यानि गोचरो विषयो यस्य स तथा; प्रत्ययो हि अयं प्रत्येयं भिन्नं विषयमपेक्ष्य प्रादुर्भवति, विषयविषयिभावश्च ग्रहीतृग्रहणग्राह्यरूपे त्रितये सति उपपद्यते। तदपि त्रितयं साधारणं प्रवृत्तिकारणं विना न

---

पं० १२ ख० पु० सामान्यशब्दादीनि इति पाठः।

पं० १३ ख० पु० ह्येवं प्रत्येकं भिन्नमिति पाठः।

स्यात् इति। तच्चतुष्टयमनेन वाक्येनाक्षिप्तम्। तत्र ग्रहीता प्रत्ययवान् पशुः, ग्राह्याः प्राधान्येन शब्दस्पर्शरसरूपगन्धाः आकाशादिस्थूलभूताश्रया विशेषात्मका गुणाः, तदात्मना समस्तविषयोपलब्धेः। तेषां चात्रोपादाने उपपन्ने सामान्ये सर्वविशेषाणामन्तर्भावः,—इति सामान्यवाचिना तन्मात्रशब्देन उपात्ताः। तैः शब्दादिभिराश्रयभूतानि स्थूलानि आकाशादिभूतानि आक्षिप्तानि, निराश्रयाणां तेषामनुपपत्तेः। तदेतत् दशविधं कार्यम्। स च प्रत्ययवान् परवशः पशुः विषयित्वे सति इष्टानिष्टविषये हानादानाक्रियायां करणमपेक्षते। तत्र येन विषयं निश्चिनोति तत्प्रकाशप्रधानं बुद्ध्याख्यं करणं। येन च अनात्मभूतं देहादिकमर्थम् आत्मतया अभिमन्यते तद्विपर्ययात्मकं नियमप्रधानमहंकाराख्यं, येन च प्रवृत्तिप्रधानेन विषयं विकल्पयति तत्संशयात्मकं मनोऽभि-

पं० १२ क० ग० पु० क्रियायां कारणमपेक्षते इति पाठः।

धानम्,–इति त्रिविधमन्तःकरणं यथोत्तरं कार्यत्वेनोक्तम्। येन तु शब्दादीन् गृह्णाति तच्छ्रोत्रादिबुद्धीन्द्रियपञ्चकम्। येन वचनादि-क्रियां करोति तद्वागादिकर्मेन्द्रियपञ्चकम्,–इ-ति दशविधं वहिष्करणम्। तच्च अहंकारका-र्यतयैव उक्तम्। तदेतदाभ्यन्तरं बाह्यं च क-रणम्। एवं त्रयोविंशतिविधः कार्यकरणवर्गो विषयित्वान्यथानुपपत्त्या अत्राक्षिप्तः। तथा प्र-वर्तकं हेतुमन्तरेण विषयप्रवृत्तेरभावादपि विष-यत्वं न उपपद्यते,–इति स हेतुरत्र सुखाद्यात्मा प्रधानाभिधान आक्षिप्तः। तथाहि–सुखं प्रति-प्राणि स्ववासनानुगुणेष्टविषयप्राप्तेस्तृप्तिरनित्य आनन्दः, तेन प्रयुक्तः सन् इष्टविषयादानाय प्रवर्तते, तद्विपर्ययो दुःखम् अनिर्वृतिः ततोऽनि-ष्टविषयहानाय; उभयन्यग्भावस्तु मोहः, त-स्मिन् सति व्यवतिष्ठते,–इति सुखदुःखमोहा-त्मकं प्रकाशप्रवृत्तिनियमार्थं सत्त्वाद्याभिधानगु-णत्रयमयं विकारावस्थायामपि अन्योन्याविना-

भूतत्वात् एकमेव प्रधानाख्यं सर्वप्राणभृतां विविधवासनानुगुणनानारूपकार्यकरणात्मकस्वपरिणामप्रपञ्चानुगतसाधारणं प्रवृत्तिकारणं रागाख्यमायीयमलप्रपञ्चभूतम्। अनेनैवाभिप्रायेण वृत्तिकृता स च तन्मात्रगोचरः, इत्यस्य पदस्य

'रूपाद्यभिलापात्मकः'

इति पर्यायः प्रयुक्तः। रूपादिषु योऽभिलाषो रागः, तन्निमित्तकत्वात् तदात्मकः प्रत्ययोद्भवः; ततश्च अभिलाषप्रपञ्च एव सुखाद्यात्मकं प्रधानं कारणम् इत्येषा प्राधानिकी तत्त्वचतुर्विंशतिः 'स च तन्मात्रगोचरः' इत्यनेनाक्षिप्ता। प्राक् च द्वादश तत्त्वानि निर्णीतानि, तद्यथा—शिवादिविद्यान्तानि पञ्च, माया, कालादिपञ्चकं, पशुतत्त्वं च,—इति षट्त्रिंशत्तत्त्वरूपतया पारमेश्वरी एकैव शक्तिर्विजृम्भते। व्याख्यातप्रायमेतत् वृत्तौ

पं० २ क० पु० कारणात्मकस्वपरिणामेति पाठः।

पं० १२ ख० पु० तत्त्वान्याक्षिप्तानि इति पाठः।

पं० १४ ख० पु० कलादिपञ्चकमिति पाठ.।

'परामृतरसात् स्वरूपात् अपायः प्रच्युतिः'

इत्यादिना ॥ १६ ॥

एवं प्रत्ययोद्भवस्य पशुत्वकारणभावे प्रतिपादिते शक्तिवर्गस्य भोग्यतां गतः सन् पशुः स्मृतः,–इति पूर्वोक्तविरोधपरिहारार्थमाह

**स्वरूपावरणे चास्य शक्तयः सततोत्थिताः ।**
**यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः ॥ १७ ॥**

'अस्य' एवंप्रत्ययापादितपशुत्वस्य आत्मनः 'स्वरूपावरणे' स्वरूपस्य शिवात्मकस्य स्वभावस्य आवरणे, तथाप्रत्यवमर्शाभावमात्रेण हेतुना व्यवधाने स्थगने; तन्निमित्तं 'शक्तयः' प्रागुक्ताः 'सततोत्थिताः' पतिपशुव्यवहारस्य न कदाचित् उपरमात् 'सततं' नित्यम् 'उत्थिताः' उदिताः; 'यतः' अस्वतन्त्रतापादनात्मना अमृतरसापायहेतुत्वेन प्रतिपादितो यः 'प्रत्ययो-

पं० ६ ख० पु० एवंप्रत्ययापायपशुत्वस्येति पाठः ।

पं० १० ख० पु० शिवात्मस्वस्वभावेति पाठः ।

द्भवः' स 'शब्दानुवेधेन' शब्दसंभेदेन 'विना' न संभवति,—इति शेषः। एतदेव कुतः? इति चेत्, तदुच्यते,—शब्दः खलु प्रत्यवमर्शात्मा अवभासात्मनोऽर्थस्य अन्यतः खड्गोदकादर्शादेरन्तःक्रोडीकृत-तत्पदार्थसार्थात् जडात् भेदतः स्वभावभूत एव। तथा च प्रत्यभिज्ञा

'स्वभावमवभासस्य विमर्शं विदुरन्यथा।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥'

इति। अन्यत्रापि उक्तम्

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमं विना ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥'

इति। स च सर्वावच्छेदविरहितविशुद्धचित्प्रकाशात्मकमुख्यार्थनिष्ठः सन् प्रत्यवमर्श इत्युच्यते। जातिगुणक्रियाभिधानादिविविधविशेषावच्छिन्नभिन्नरूपविश्वात्मकार्थावभासनिष्ठस्तु विविधकल्पनात्मकत्वात् विकल्प इत्युच्यते। तदेव शब्दस्य मुख्यं रूपं, तत्संकेतत्वेन व्य-

---

पं० १० ख० पु० शब्दानुगमादृते इति पाठः।

पं० ११ ख० पु० सर्वं शब्देन गम्यते इति पाठः।

वस्थितः श्रोत्रग्राह्यो ध्वनिविशेषात्मकोऽर्थ एव प्रायेण शब्द इति व्यवह्रियते। तस्माच्छब्द-रूपतामापन्नाः प्रत्ययोद्भवप्राणभूताः शक्तय एवास्य स्वरूपावरणे सदोद्युक्ता,—इति शक्ति-वर्गस्य भोग्यतां गतः सन् पशुः स्मृतः,—इति पूर्वोक्तेनाविरोधः प्रतिपादितः।

'स्वरूपस्य स्वस्वभावस्याच्छादने'

इत्यादिना वृत्तौ व्याख्यातमेतत् ॥१७॥

अथास्य शब्दपर्यन्तस्य प्रसरस्य, परस्याश्च शक्तेरभेदप्रतिपादनपूर्वं तत्स्वरूपाप्रत्यभिज्ञा-मात्रनिबन्धनौ बन्धमोक्षौ प्रतिपादयितुमाह

सेयं क्रियात्मिका शक्तिः
शिवस्य पशुवर्तिनी।
बन्धयित्री स्वमार्गस्था
ज्ञाता सिद्ध्युपपादिका ॥१८॥

'सा शिवस्य' स्वस्वभावस्यैव परमेश्वरस्य 'क्रियात्मिका' तत्स्वरूपप्रत्यवमर्शलक्षणव्यापा-

पं० १० ख० पु० प्रत्यभिज्ञानिबन्धनाविति मात्रशब्दहीनः पाठः।

रशरीरा 'शक्तिः' अव्यभिचारी धर्मः समर्थतारूपः 'इयं' इतिपादितप्रसररूपा शक्तिः यैव अद्वयचिन्मात्रस्वभावप्रत्यवमर्शिनी परा शक्तिः परमेश्वरस्य सैव इयम् इत्थं-प्रसृत्य अवभासते, तत्त्वतो नास्ति अस्याः ततो भेद इत्यर्थः । यथोक्तं वृत्तौ

'न सा जीवकला काचित्संतानद्वयवर्तिनी ।
व्याप्त्री शिवकला यस्यामधिष्ठात्री न विद्यते ॥'

इति। अस्य हि श्लोकस्यायमर्थः—जीवस्य पुंसः पशोः कलानां द्विविधः संतानो—ज्ञानरूपः क्रियारूपश्च; तत्र ज्ञानरूपोऽन्तःकरणात्मकः त्रिविधः, क्रियारूपो बहिष्करणात्मकः स्वभावस्थप्राणशक्तिसहित एकादशविधः,—इति चतुर्दशविधो जीवकलासंतानः संग्रहात् द्विविध एव, संतानद्वयवर्तिनी जीवस्यात्मनः कला सा न काचित् संभवति इति शेषः; यस्यां व्याप्त्री देशकालाद्यनवच्छिन्नवैभवाधिष्ठात्री वेद्यत्वादिना सर्वमधिष्ठाय आत्मपरतन्त्रं कृत्वा वर्तमाना

शिवकला, शिवस्य परमात्मनः कला परा शक्तिः उक्तरूपा न विद्यते सत्तां व्यभिचरति, सैव इत्थमवभासते इत्यर्थः। वैश्वरूप्येऽपि अवभासलक्षणस्य सामान्यरूपस्य शिवधर्मस्य व्यापकस्य अतिरोभावात्, सैव परा शक्तिरियम्, अपरा स्थूलक्रियारूपा,—इति परापरयोः शक्त्योरभेद एव पारमार्थिकः प्रत्यभिज्ञापितः। तदेतत् ज्ञानगर्भस्तोत्रेऽप्युक्तम्

'बहिष्करणबुद्ध्यहंकृतिमनःसुषुम्नाश्रया-
चतुर्दशसु चाण्डके पथिषु येन येन व्रजेत्।
कला शिवनिकेतनं जननि तत्र तत्र स्म ते
दशोदयति दुर्लभा जगति या सुरैरप्यहो॥'

अस्यापि श्लोकस्यायं तात्पर्यार्थः—श्रोत्रादिपञ्चकं वागादिपञ्चकं दशविधं बहिष्करणं, बुद्ध्यहंकारमनांसि त्रिविधमन्तःकरणं मध्यमप्राणश्च,—इति कलायाः चिदात्मिकायाः शक्तेः चतुर्दश भेदाः। तेषां ये तावन्त एव पन्थानः

पं० ११ ख० पु० जननि तत्र सा तादृशी इति पाठः।

प्रसरमार्गास्तेषु मध्ये येन येन केनचिदेकतमेन पथा एषा कला शिवनिकेतनं व्रजेत्, शिवः परमात्मा स एव निकेतनमालयस्तद् गच्छेत्, तत्र दशा उदयति–इति संबन्धः। शिवनिकेतनं व्रजेत्–इति मायीयभेदप्रत्ययव्यतिरेकेण शिवाख्यस्वपदाश्रयणरूपः पारमार्थिकः कलाया व्यापारः सिद्धवत् व्यवहृतः। इयं हि कला शिवात्मकात् निजास्पदात् 'न दुःखं न सुखम्' इत्यादिना कृतलक्षणात् उदेति, कृतकृत्या च तत्रैवान्ते[न्तः]प्रविश्य समरसीभवति सरिदिव सागरे; मध्येऽपि बुद्ध्याद्यन्योन्याभिन्नप्रसररूपतया नानात्वेन अवभासमानापि जलरूपत्वमिव सामान्यं चिदात्मकत्वं न व्यभिचरति,– इति न कदाचित् शिवस्वभावात् अपैति; किंतु मायाशक्तिव्यामोहितैः न तथा प्रत्यभिज्ञायते–इति। एवमेषा कला येन येन पथा शिवनिकेतनं व्र-

पं० १ ख० पु० मध्ये येन केनचिदिति पाठः।

पं० ४ ख० पु० उदेति इति पाठः।

जेत्, तत्र सा तादृशी स्वसंवेदत्वात् व्यपदेष्टु-मशक्या कस्यचित् प्रबुद्धस्यैव दशा अवस्था उदयाति अभिव्यज्यते, या सुरैर्ब्रह्मादिभिरपि दुर्लभा, ते हि प्रत्ययोद्भवजनितब्रह्मत्वाद्यवच्छिन्नपाशवाभिमानानतिक्रमात् शिवरूपां पतिदशां कथमाप्नुयुः—इति। प्रकृतमिदानीं व्याख्यायते,—किंतु एवं-रूपापि असौ पारमेश्वरी क्रियात्मिका परा शक्तिः 'पशुवर्तिनी बन्धयित्री' पशौ भेदप्रत्ययोद्भवापादितपारतन्त्र्ये पुंसि वर्तमाना, बन्धस्य जन्मादिप्रबन्धपरिवर्तनात्मकस्य संसारस्य कर्त्री।—पशुः किल सर्वतो व्यवच्छिन्नस्य आत्मन एव स्वत्वेन एनाम् अध्यवस्यन् इष्टानिष्टविषयोपादानहानजनितसुखाद्यनुभवमात्रपर्यवासितनिजज्ञानक्रियापरिस्पन्दत्वात् अपरामृष्टतत्परमार्थो व्यवच्छिनत्ति; । सा चैवं व्यवच्छिन्नत्वेन गृह्यमाणा तम् आ प्र-

---

पं० ४ ख० पु० तेन हि इति, ब्रह्मत्वाद्यनवच्छिन्नेति च पाठः।

पं० १० ख०पु० जन्मादिप्रबन्धस्य संसारस्येति पाठः।

पं० १६ ख० पु० आ बोधोदयादिति पाठः।

बोधप्रत्युदयात् पशुत्वेन बध्नाति;—इति 'पशुवर्ति-नी बन्धयित्री' इत्युक्तम् । ननु एवं-स्वभावत्वात् अस्याः, पशोः बन्धध्वंसाभावप्रसङ्गः ? तत आ-ह—'ज्ञाता' विदिता शिवात्मकस्वस्वभावप्रत्य-वमर्शक्रियारूपतया प्रत्यभिज्ञाता सती 'सिद्-ध्युपपादिका' सिद्धेः आत्मैश्वर्याधिगमलक्ष-णायाः परायाः, आनुषङ्गिकविविधविभूत्यावि-र्भावरूपायाश्च अपरायाः उपपादिका, वस्तु-स्वभावबलात् संपादयित्री; यत एषा 'स्वमार्ग-स्था' स्वस्मिन् आत्मीये शिवस्वभावरूपे मार्गे अध्वनि स्थिता, तद्व्यतिरिक्तविषयान्तरानिवृ-त्तगतिरित्यर्थः; प्रत्ययोद्भवरूपमायावैभवोद्भा-वितभिदापेक्षया तु पशुवर्तिनी जीवकला—इ-त्युच्यते; प्रत्युदितप्रबोधस्य तु यथावस्थितत्वेन प्रत्यभिज्ञायमाना सर्वाः सिद्धीरुपपादयति।—इ-ति श्लोकार्थं व्याख्याय, इदानीं यथा एषा स्वमार्गस्था तथा वितत्य प्रतिपाद्यते । एषा

---

पं० १२ ख० पु० प्रत्ययोद्भमेति, प० १३ ख० पु० भेदापेक्षयेति पाठः ।

हि परमेश्वरस्वरूपप्रकाशप्रत्यवमर्शमात्ररूपा परैव शक्तिः वाग्रूपतया प्रसृता,—इति परमेश्वरेण शास्त्रेषु बहुशः प्रदर्शयता सर्वदा स्वमार्गस्थत्वमस्याः प्रतिपादितम् । तथा च श्रीमालिनीविजये

'या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।
इच्छात्वं तस्य सा देवि सिसृक्षोः संप्रपद्यते ॥
सैकापि सत्यनेकत्वं यथा गच्छति तच्छृणु ।
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ॥
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ।
एवं भवत्विदं सर्वमिति कार्योन्मुखी यदा ॥
जाता तदैव तत्तद्वत्कुर्वत्यत्र क्रिया मता ।
एवं यथा द्विरूपैव पुनर्भेदैरनेकताम् ॥
अर्थोपाधिवशाद्याति चिन्तामणिरिवेश्वरी ।
तत्र तावत्समापन्ना मातृभावं विभिद्यते ॥
द्विधा च नवधा भेदैः पञ्चाशद्धा च मालिनी ।'

इत्यादिना प्रकाशितोऽयमर्थः । तथा शब्दाद्व-

पं० ३ ख० पु० बहुशः प्रतिपादिता सर्वथा स्वमार्गेति पाठः ।

पं० १२ कुर्वन्त्यत्रेति पाठः समस्तादर्शपुस्तकेषु दृश्यते ।

यद्यादिभिरपि विवृत्तिवाचोयुक्त्या तत्प्रसरं प्रतिपादयद्भिः स्वमार्गस्थत्वमेव अस्याः प्रदर्शितम् । यदाहुः

'वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥'

इति । सैषा अत्यन्ताभेददशा, यस्यां स्फुटमेव अस्याः स्वमार्गस्थत्वम् । यदा पुनः इदमिति नानारूपं विभक्तत्वेन क्रमिकत्वेन च अन्तः परिस्फुरितमखिलं जगत् आविमर्शात् उपसंहृत्य विभागक्रमशून्यस्वमहिम्नि स्वभावव्योम्नि निमिषन्ती स्वरूपप्रकाशमात्रपरिशेषैव भवति, तदा आन्तरस्य परस्य ज्ञातुः पश्यन्त्यभिधानवाग्रूपा विवृत्तिः—इत्युक्ता । यदाहुः

'अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥'

इति । अत्रापि स्वमार्गस्थैव एषा । यदा प्राणप्रयत्नव्यतिरेकेण प्रतिप्राणि शरीरान्तरस्वो-

---

पं० ८ क० पु० क्रमिकत्वेन भान्त इति, ग० पु० प्रथमः पाठः ।

दितानादिनिधनध्वनिविशेषात्मकतया काला-दिक्रमं वर्णादिविभागं भाविनमनुगच्छन्ती प्रसरं गृह्णाति, तदा मध्यमाख्य वाग्रूपा वि-वृत्तिः—इत्यभिहिता; तदापि संविन्मात्रप्रकृति-कत्वमनातिक्रान्ता स्वमार्गस्थैव एषा । यदुक्तम्

'केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥'

इति । यदा तु प्रयोक्तृपुरुषेच्छानुविधायिप्रय-त्नप्रेरिते प्राणाभिधाने मरुति शरीरोद्देशेषु उरःप्रभृतिषु जाताभिघाते, सैव सामान्यध्व-निरूपा स्वरव्यञ्जनादिभेदाविभक्ताकारादिनि-यतवर्णरूपतां प्रयोक्तृभेदेऽपि अव्यभिचरन्ती प्रसरति, तदा वर्णभेदादिव्यञ्जकप्राणमात्रा-श्रया वैखर्यभिधानवाग्रूपा विवृत्तिः—इत्युक्तम् ।

---

पं० ६ ख० पु० क्रमरूपानुवर्तिनीति पाठः ।

पं० ८ ख० पु० पुरुषानुविधायीति पाठः ।

पं० १२ ख० पु० रूपताप्रयोक्तृ इति पाठः ।

पं० १३ क० ग० पु० च पाठान्तरात्मा वर्णभेदाभिव्यञ्जकेति, पाठोऽस्ति ।

यदुक्तम्

'स्थानेष्वभिहते वायौ कृतवर्णपरिग्रहा ।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥'

इति । तदापि असौ देशकालाधारप्रयोक्त्रादिवैचित्र्यैः अविकार्यनियतवर्णसमुदायात्मिकतां पुरुषेच्छादिसापेक्षाभिव्यक्तिकामजहती नित्यैव, संविद्रूपत्वमपि अनुगतमेव मध्यमावदस्यामपि;— इति स्वमार्गस्थत्वमपि अस्या न व्याहन्यते। एवमसौ वैखरीरूपतामापन्नापि मातृकावर्गवर्णपदवाक्यार्थभेदेन अपर्यन्तं प्रसरं गृह्णाति। यथा च वर्णवैखरीरूपा इयम् एवमनन्तप्रसरा, तथा स्वरवैखरीरूपापि स्वरग्राममूर्च्छनातानजातरागादिभेदेनापि अनन्तप्रसरा । तदेवम् इयं पारमेश्वरी परा शक्तिः

---

पं० ४ क० पु० देशकालाकरेति पाठान्तरं च ।

पं० ६ क० पु० सोपक्ष्याभिव्यक्तीति पाठः ।

पं० ११ ख० पु० स्वरवैखरीरूपेयमनन्तेति पाठः ।

पं० १२ ख० पु० अत्यन्तप्रसरा इति पाठः ।

स्वभावप्रत्यवमर्शक्रियादिना सांकेतिकशब्दपर्यन्तेन निरवधिना स्वमहिम्ना प्रसृतापि, सर्वस्यैव पदार्थजातस्य सामान्यसंवित्प्रकाशव्यतिरेकेण अनुपपन्नस्वात्मलाभस्य प्रत्यवमर्शिनी सती, सर्वदा स्वमार्गस्थत्वं न व्यभिचरति। ततश्च—जगत्क्रीडार्थम् ईश्वरोद्भावितमायाशक्तिजनितैः नानाविकल्परूपैरावरणैः संबध्यमानापि अनुग्रहशक्तिस्पर्शोन्मेषितसत्यतद्रूपग्रहणकुशलविमलविज्ञानदृशः प्रमातॄन् प्रति नः स्थगयितुमत्यन्तं तिरोधातुमशक्यैव—।

यदुक्तम्

'सेयमाकीर्यमाणापि नित्यमागन्तुकैर्मलैः ।
अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते ॥'

इति। तत् इत्थं परममेव कारणं यथाविभक्तशब्दरूपतयापि प्रसृतम्—इति स्थितम् ।

'सत्यं परागतं सूक्ष्मं निरवद्यमनुत्तरम् ।
अथ ब्रह्म परं शान्तमादिवर्णत्वमागतम् ॥'

---

पं० ८ ख० पु० अनुग्रहशक्तिवशोन्मिषितेति पाठः ।
पं० ९ ख० पु० तद्रूपकुशलेति ग्रहणशब्दहीनः पाठः ।

इत्यादि । तथा च शब्दाद्वयवादे सामान्येन शब्दार्थोभयरूपोऽपर्यन्तावान्तरभेदो योऽयमीश्वरस्य शक्तिप्रसरः , तं विवर्तवाचोयुक्त्या व्यवहरति स्म । यदाह

'अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितः ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥
अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥'

इति । अत्र ब्रह्मपर्यायशब्दतत्त्वतया पारमेश्वरमेव रूपं निर्दिष्टम् । तत्—इयं परा शक्तिरेव स्वमार्गस्था ज्ञाता तथा सम्यक्प्रतिपन्नस्वभावा सती संपूर्णां सिद्धिम् उपपादयति,—इत्युक्तम् । सेयमेव वैखरीरूपतामापन्ना पुरुषप्राणपरिस्पन्दाधीनाभिव्यक्तिकत्वात् स्थूला क्रियाशक्तिः,—इत्यपि क्वचिदुक्ता, तत्पूर्वा च मध्यमा वाक् इच्छाशक्तिः, तत्पूर्वा च पश्य-

पं० १ क० पु० वादिसामान्येनेति पाठान्तरं च ।
पं० ६ ख० पु० व्यक्तये स्वस्वरूपस्येति पाठः ।
पं० १२ क० पु० सेयमेवं वैखरेति पाठः ।

न्ती ज्ञानशक्तिः—इति । तदेवं शक्तित्वे सति शक्तिमन्तमियम् अपेक्षते,—इत्यभिन्नमातृकात्मकः शब्दराशिरूपाक्रियाशक्तिप्रधान ऐश्वरो विग्रहोऽस्याः समाश्रयः, यत्र इयं वर्गादिभिः वाक्यपर्यन्तैः स्वप्रसरभेदैः विजृम्भते । योऽपि वाक्यरूपः प्रसरोऽस्याः, स नित्यानित्यभेदेन द्विविधः, —तत्र मन्त्रात्मकः शास्त्रात्मकश्च नित्यः, लौकिकव्यवहारविषयलौकिकवाक्यात्मकस्तु अनित्यः । एवं परमेश्वरशक्तित्वेन प्रत्यभिज्ञायमाना एषा वाङ्मयी विभूतिः परसिद्धिप्रदा, नानापशुसंबन्धितया तु अवच्छिद्यमाना बन्धहेतुर्भवति—इति । व्याख्यातमेतद् वृत्तौ

'सा चेयं क्रियात्मिका क्रियास्वभावा'

इत्यादिना ॥ १८ ॥

एवं पतिस्वभावस्यैव आत्मतत्त्वस्य स्वमायावभासितं पशुत्वं प्रतिपाद्य, इदानीं पशोः सतो विद्योदयात् स्वमार्गस्थत्वेन अभिज्ञायमाना एषा

---

पं० ८ ख० पु० लौकिकवाक्यात्मकलौकिकव्यवहारविषय इति पाठः ।

परा शक्तिः, पतित्वाभिव्यक्तिमावहन्ती संसार-विच्छेदहेतुः यथा भवति, तथा संसारकारणप्रति-पादनपूर्वं हेतुकथनं प्रतिजानानः श्लोकद्वयमाह

तन्मात्रोदयरूपेण मनोऽहंबुद्धिवृत्तिना ।
पुर्यष्टकेन संरुद्धस्तदुत्थं प्रत्ययोद्भवम्
॥ १९ ॥
भुङ्क्ते परवशो भोगं तद्भावात्संसरेदतः ।
संसृतिप्रलयस्यास्य कारणं संप्रचक्ष्महे
॥ २० ॥

'अतो' हेतोः 'अस्य' उक्तवक्ष्यमाणरूपस्य पशोः, यः 'संसृतिप्रलयः' संसारक्षयः, तस्य 'कारणं' हेतुं 'संप्रचक्ष्महे' युगलकात् अस्मादुत्तरेण श्लोकेन सम्यक् प्रकर्षेण च ब्रूमहे । अत्र व्यधिकरणेन षष्ठ्यौ व्याख्येये। कुतो हेतोः?—यतोऽयं पशुः 'पुर्यष्टकेन संरुद्धः' सन् 'भोगं भुङ्क्ते' पुर्यां सूक्ष्मे शरीरे तन्मात्रपञ्चकं गुणत्रयम् —इति स्थूलशरीरकारणभूत-

मष्टकम् यत् संनिविष्टं, तन्मुखं पुर्यष्टकम्, तत्कार्यत्वात् स्थूलमपि शरीरं तच्छब्देन इह पुर्यष्टकम्—इत्युच्यते, तेन 'संरुद्धः' तावन्मात्रमात्मत्वेनाभिमन्यमानो विस्मृतसर्वात्मकत्वादिस्वसामर्थ्यवशात् बद्धः, अत एव 'परवशः' सर्वशक्तिस्वभावव्यतिरिक्तकारणान्तराधीनसकलसमीहितार्थसिद्धत्वात् अस्वतन्त्रः सन् 'भोगं' मायावभासितानादिनिजकर्मोपाचितवासनानुगुणसुखादिसंवेदनात्मकतया पर्यवसितं स्वविषयमात्रं 'भुङ्क्ते' अनुभवति। कीदृशं?'तदुत्थं' तस्मात् पुर्यष्टकात् उत्थितमुद्भूतं,—देहबन्धे हि सति भोगनिर्वृत्तिरुपपद्यते—। कं तं भोगम्?— 'प्रत्ययोद्भवं' प्राग्व्याख्यातस्वरूपनि[redacted]ज्ञानोत्पादरूपं, — स्वविषयमात्रभोक्तृत्वाभिमानरूपस्य प्रत्ययस्य उत्पाद एव भोगः— इत्यर्थः। कीदृशेन पुर्यष्टकेन संरुद्धः ? — 'तन्मात्रोदयरूपेण' तन्मात्राणि

---

पं० ११ ख० पु० कीदृशं तदुत्थितमिति पाठः।

पं० १२ क०ग० पु० भोगनिवृत्तिरिति पाठः।

स्थूलभूतकारणभावेन ईश्वरेच्छयैव अवभासिताः सूक्ष्माः शब्दादयः, तेषामुदयः स्थूलशरीरभावपरिणताकाशाद्यात्मना अभिव्यक्तिः। तथा च—अत्र यद्यन्नाड्यादि सुषिरं तदाकाशं शब्दतन्मात्रोदयः, यद्यत् सक्रियं प्राणादि स वायुः स्पर्शतन्मात्रोदयः, यद्यत् उष्णप्रभास्वरादिरूपं अग्न्यादि तत्तेजो रूपतन्मात्रोदयः. यद्यत् द्रवरूपं रुधिरादि ता आपः रसतन्मात्रोदयः, यद्यत् कठिनं मांसास्थिस्नाय्वादि सा पृथ्वी गन्धतन्मात्रोदयः, —इति तन्मात्रोदयो रूपमाकारो यस्य तत् तथा तेन। एवं तन्मात्रोदयरूपत्वं व्याख्याय, गुणोदयरूपत्वं दर्शयितुं विशेषणान्तरमाह,—'मनोऽहंबुद्धिवृत्तिना' इति। अनुभूयमानस्य अस्य आत्मलाभोऽनुभवश्च अन्तःकरणनिष्ठः—इति मनसि रजोगुणोदये, अहङ्कारे तमोगुणोदये, बुद्धौ च सत्त्वगुणोदयरूपायां वृत्तिर्वर्त-

पं० १४ ख० पु० अन्तःकरणनिविष्ट इति, इति च पाठः।
पं० १२ ख० पु० रजोगुणमये, तमोगुणमये इति पाठः।

नम् अवस्थितिः यस्य तादृशेन । स च एवंविधेन पुर्यष्टकेन संरुद्धः सन् पशुः 'तद्भावात्' तस्य पुर्यष्टकस्य स्थूलसूक्ष्मस्य भावात् विद्यमानत्वात् अप्रबोधे सति अनुच्छेदात् 'संसरेत्' अनवरतं नानाशरीरभोगवासनाकर्मचक्रभ्रममनुभवेत् आ प्रबोधप्रत्युदयात् । इदमत्र तात्पर्यम्—देहसंरुद्धस्य पुंसः प्रतिनियतसुखादिसंवेदनात्मनि भोगे यो भोक्तृत्वाभिमानः, तत् संसारकारणम्, अतोऽस्य निरावरणस्वस्वरूपास्थितिमात्रं संसारविनाशहेतुं संप्रचक्ष्महे—इति । व्याख्यातमेतत् वृत्तिकृता

'तन्मात्रोदय'

इत्यादिना

'भुंक्तेऽश्नाति परवशः'

इत्यादिना च ॥ १९ ॥ २० ॥

अधुना आत्मन एव शिवस्य यथोक्तैश्वर्यरूपं पतित्वं येन अभिव्यज्यते, तत् समनन्त-

पं० ६ ख० पु० प्रबोधप्रत्ययात् इति पाठः ।

प० ८ ख० पु० संवेदनात्ससरदात्मनि इति पाठः ।

रं प्रतिज्ञातम् उपायान्तरम् उपदिशन् प्रकरणमुपसंहरति

यदा त्वेकत्र संरूढ-
स्तदा तस्य लयोद्भवौ।
नियच्छन् भोक्तृतामेति
ततश्चक्रेश्वरो भवेत् ॥ २१ ॥

'यदा तु' यस्मिन् पुनः काले स्थूलसूक्ष्मत्वात् अनयोः पुर्यष्टकसंज्ञानिर्दिष्टयोः प्रत्ययोद्भवमात्रमूलयोः शरीरयोः मध्यात् 'एकत्र' अन्यतरस्मिन्, अथवा—प्राक्प्रातिपादितोपपत्त्या संवेद्यमानस्यैव अर्थस्य शरीरत्वे व्यवस्थिते भूतात्मकभावात्मकभेदेन स्थूलसूक्ष्मयोः शरीरयोर्मध्यादेकत्र, अथवा— ध्येयतया आलम्बनीययोः स्थूलसूक्ष्मयोर्भावयोर्मध्यात् एकत्र 'संरूढः' सम्यक् अविलम्बतया रूढः,

पं० ४ ख० पु० तस्य लयोदयाविति पाठः ।

पं० ८ ख० पु० अनयोः प्रत्ययोद्भवमूलमात्रयोः पुर्यष्टकनिर्दिष्टयोरिति पाठः ।

पं० १९ ख० पु० अवलम्बनतया इति पाठः ।

एकाग्रताप्रकर्षात् अभेदेन परिणातसंवित् साधकः 'तदा, तस्मिन् क्षणे 'तस्य' अभेदेन प्रतिपन्नस्य यथोक्तस्य शरीरस्य 'लयोद्भवौ' त्यागग्रहरूपौ विनाशोत्पादौ 'नियच्छन्' भोक्तृशब्देन वक्ष्यमाणस्य सत्यस्य कर्तुः आत्मन एव कार्यतया अवधारयन्,—अहमेव नित्यनिरावरणस्वतन्त्रचिन्मात्रस्वरूपः अनयोः कर्ता—इति निर्विकल्पतया व्यवस्थापयन् 'भोक्तृतामेति' भोक्तुरुपलब्धृमात्रस्वभावस्य परमात्मनो भावो भोक्तृता तामाप्नोति, सतीमपि तदानीमेव प्रत्यभिज्ञया स्वीकुरुते 'ततः' सत्यात्मस्वरूपप्रत्यभिज्ञालक्षणात् हेतोः 'चक्रेश्वरो भवेत्' चक्रस्य प्राक्प्रतिपादितास्थित्या चराचरभावपर्यन्तेन प्रपञ्चेन प्रसृतस्य शब्दराशिसमुत्थस्य स्वशक्तिसमूहस्य, ईश्वरोऽधिष्ठाता, स्वैश्वर्यविजृम्भामात्रतया अवगम्यमा-

पं० ४ ख० पु० त्यागग्रहणेति पाठः ।

पं० ५ ख० पु० सत्यकर्तुरिति पाठः ।

पं० १४ ख० पु० प्रपञ्चेन प्रसृतेनेति पाठः ।

नस्य यथेष्टविनियोक्ता संपद्येत। तदैव स्वाभाविकस्वातन्त्र्याभिव्यक्तेः पशुप्रत्ययप्रध्वंसे सति, शक्तिचक्रभोग्यतां विमुच्य, तद्भोक्तृभावलक्षणमैश्वर्यं प्रतिपाद्येत; अतः तौ लयोद्भवौ तत्र भोक्तरि आत्मानि नियच्छेत्–इति वाक्यार्थः। इदमत्र तात्पर्यम्–यथा सर्वः कश्चित् देही देहमात्रप्रतिष्ठितात्माभिमानो बाह्यस्य घटादेः पदार्थस्य ग्राह्यतयैव प्रतिपन्नस्य त्यागग्रहौ तादृशि स्वात्मानि नियच्छन् अहमेव एतयोः कर्ता–इति निश्चिन्वन्, तावति स्वतन्त्रं कर्तारं शरीरितानिविष्टमात्मानं मन्यते, तथैव तस्य शरीरस्य वेद्यभूमिकापादनेन क्रियमाणौ त्यागग्रहौ तद्विलक्षणे सर्वदा वेद्यत्वसंस्पर्शासहिष्णौ अनन्यसाधारणकर्तृत्वस्वभावे सत्ये स्वात्मानि वस्तुसामर्थ्यात् नि-

पं० ११ ख० पु० निविष्टं तमात्मानमिति पाठः।

पं० १३ ख० पु० तद्विलक्षणेनेति पाठः।

पं० १४ ख० पु० कर्तृस्वभावे इति पाठः।

यमं भजन्तावपि अप्रबुद्धत्वात् न प्रतिपद्यते; ततः शरीरशरीरिविवेकग्रहणायोग्यप्रज्ञप्रबुद्धमेव प्रति अयमुपदेशः; यतः तादृश एव अनुग्रहशक्तिशकलितसंशयग्रन्थिः परमेश्वरस्य एवंविधविशेषोपदेशपात्रम् । यदाह

'अयं सर्वस्य प्रभव इतः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति रमयन्ति च ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मां प्रापयन्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥'

इति । यस्मात् उपदेशात् अनुशील्यमानात्, अस्य 'एकत्र' इति प्रतिपादितस्य शरीरस्य अभेदेन प्रतिभासमानस्य सतः, सम-

पं० ६ ख० पु० प्रसिद्ध-श्रीभगवद्गीतापुस्तकेषु च संदृश्यमानाः
'अहं सर्वस्य प्रभवो मत्तः सर्वमिति ।
'तुष्यन्ति च रमन्ति चेति ।
'येन मामुपयान्ति ते' इत्येवं पाठाःसन्ति ।
पं० १२ ख० पु० तेषामेवानुग्रहार्थमिति पाठः ।
पं० १६ ग० पु० ख०पु० च, शोधितः शरीरस्य भेदेनेति पाठः

नन्तरं वेद्यीक्रियमाणस्य त्यागग्रहात्मकौ लयोद्भवौ तद्विधार्मिणि भोक्तरि सर्वेश्वरे स्वात्मन्येव स्वातन्त्र्येण कार्यतया नियम्यमानौ नियन्तुः परस्वभावप्रत्यभिज्ञामावहन्तौ सर्वैश्वर्याय कल्पेते, ततः तौ तत्र नियच्छेत्—इति वाक्यार्थः। तत् अनेन आत्मन एव शिवस्य स्वेच्छामात्राधीनौ जगतः प्रलयोदयौ, जगदपि तत्स्वरूपाभेदात् तस्य स्वशक्तिचक्रमयो विभव—इति यथोपक्रान्तार्थनिर्वाहात् एकमेव तत्त्वं स्वरूपपरामर्शमात्राव्यभिचारधर्मकं परमार्थसन्, अतो व्यतिरिक्तं किंचित् न संभवति—इति उपपादितम् । यदुक्तम्

'परमार्थे तु नैकत्वं पृथक्त्वाद्भिन्नलक्षणम्।
पृथक्त्वैकत्वरूपेण तत्त्वमेकं प्रकाशते ॥
यत्पृथक्त्वमसंदिग्धं तदेकत्वान्न भिद्यते ।
यदेकत्वमसंदिग्धं तत्पृथक्त्वान्न भिद्यते ॥

---

पं० २ क० ग० पु० तद्विधर्मिणि इति पाठः।
पं० ९ ख० पु० इति प्रथमोपक्रान्तेति पाठः।
पं० १० ख० पु० एकमेव स्वतन्त्रं तत्त्वमिति पाठः।
पं० ११ परमार्थसत् इति संगतं भाति।

द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः।
अन्तःकरणतत्त्वस्य भागा बहिरवस्थिताः॥'

इति। अयमेवार्थः उक्त्यन्तरेण स्वस्तोत्रे प्रतिपादितोऽस्माभिः

'चित्रालोकविकल्पकल्पितनवाकल्पाङ्कनानाकृतिं
नृत्यन्तीं बहुधा बहिः स्ववपुषोऽप्यन्तर्न भिन्नां पुनः।
नित्यं नूतनकौतुकः प्रियतमां स्वां शक्तिमालोकयन्
अच्छिन्नाप्रतिमप्रमोदमहिमा शंभुर्जयत्येककः॥'

इति। तत् अत्र समनन्तरव्याख्याते श्लोके प्रकरणारम्भश्लोकप्रतिज्ञातः स्वसंवेदनसंवेद्य आत्मैश्वर्याद्वयलक्षणोऽर्थो निर्वाहितः। व्याख्यातमेतत् वृत्तिकृता

'यदा पुनरेकत्र स्थूले सूक्ष्मे वा'

इत्यादिना ग्रन्थेन ॥ २१ ॥

इति श्रीराजानकश्रीरामविरचितायां स्पन्दविवृतौ शक्त्यात्मकविश्वाव्यतिरेकोपलब्धिः प्रकीर्णं च चतुर्थो निःष्यन्दः समाप्तः ॥ ४ ॥

इदानीम् आत्मन एव एकस्य तत्त्वस्य संशयमात्रम् अप्रथने कारणं, तच्च सद्गुरूपदेशव्यतिरेकेण न शक्यमुन्मूलयितुम्, परमेश्वरो हि गुरुमूर्तिमाविश्य अनुग्राह्यान् स्वप्रत्यभिज्ञापनेन प्रबोधयति,—इति निजगुरुसरस्वतीस्तवनद्वारेणाह

अगाधसंशयाम्भोधि-
समुत्तरणतारिणीम् ।
वन्दे विचित्रार्थपदां
चित्रां तां गुरुभारतीम् ॥ १ ॥

'ताम्' अशक्यस्वरूपप्रातिप···नां हृदि स्फुरन्तीं 'गुरुभारतीं वन्दे' गुरोः वसुगुप्ताभिधानस्य साक्षात् सिद्धमुखसंक्रान्तसमस्तरहस्योपनिषद्भूतस्पन्दतत्त्वामृतनिःष्यन्दस्य, भारतीं वाचं स्तौमि । कीदृशीम्?— 'अगाध'

पं० २ ख० पु० संशयमात्रप्रथने इति पाठः ।

पं० ३ ख० पु० गुरूपदेशेन विनेति पाठः ।

पं० ४ ख० पु० गुरुमूर्तिमाश्रित्येति पाठः ।

पं० ८ ख० पु० समुत्तरणशालिनीम् इति पाठः ।

इत्यादार्धेन विशेषणम्, अविद्यमानो गाधो विश्रान्तिभूमिका यत्र तादृशो यः 'संशयः' तत्त्वाप्रतिपत्तिरूपो विभ्रमः, स एव दुर्जरविकल्पोर्मिजालसंकुलत्वादिना 'अम्भोधिः' समुद्रः, तस्य 'समुत्तरणे' सम्यक् विलङ्घने 'तारिणीम्' नावम्। तथा 'विचित्रार्थपदां' विचित्रः अत्यद्भुतः अर्थोऽभिधेयं वस्तु येषां तादृंशि पदानि यस्यां सा। तथा तां 'चित्रां' घटनाविशेषशालित्वात् विस्मयाधायिनीम्। विशेषणद्वयेन अनेन अर्थगतं शब्दगतं च अतिशयं तुष्टाव, यतोऽत्र सकललोकाशयानिर्विषयः कतिपयलोकोत्तरप्रबुद्धहृदयसंवादी विचित्रोऽर्थः पदानां, तादृगर्थप्रातिपादनशालिनी च चित्रा पदवाक्यरचना—इति ओम्। व्याख्यातमेतत् वृत्तौ

'अगाधो हि अप्रातिष्ठोऽनन्तः'

इत्यादिना ग्रन्थेन ॥ १ ॥

---

पं० ३ ख० पु० स एव दुर्निवारेति पाठः ।

एष स्पन्दाभिधानो निधिरिह विवृतो वीतसंदेहसर्प-
त्रासः संपूर्णसिद्धिप्रदनिरतिशयज्ञानमाणिक्यगर्भः ।
सर्वार्थिभ्यो विलब्ध्या स्वयमपि सहजानन्दभोगोपलब्ध्या
भव्यानामस्य लाभं सफलयतु परः शंकरस्य प्रसादः ॥१॥

सद्गि[illegible]भूषणवरस्फारोत्पलोच्चाशय-
प्रोत्सर्पत्परिपक्वबोधमधुपेनेदं मयागायि यत् ।
रामेणानुपमप्रमोदमधुरं बद्धावधानस्य त-
च्छ्रोतुः कस्य न चेतनस्य तनुते विश्रान्तिमन्तः पराम् ॥२॥

चेतस्याकुलिते क्वचित्कुविषये तूष्णीं विवृत्य स्थितां
व्यावर्त्य प्रणयात्प्रसाद्य च शनैः कान्तां निजां चेतनाम् ।
चुम्बन्तो विगलद्विभागनिविडाश्लेषोल्लसन्नूतना-
नन्दस्पन्दनिमीलिताक्षमनिशं भूयास्त भव्याशयाः ॥३॥

अत्युक्तं यदिहास्त्यनुक्तमपि यद्यद्वा दुरुक्तं बुधै-
स्तत्सूक्ष्मांशनिरूपणैकनिभृतप्रज्ञैरवज्ञायताम् ।
पुष्पान्तर्मकरन्दसारकणिकास्वादोत्सुकाः कानने
किं विन्दन्ति कठोरकण्टकशिखास्पर्शं यथा षट्पदाः ॥४॥

शशिज्योतिर्दीपप्रभृतिभिरशक्यं शमयितुं
यदासीन्निःस्पन्दीकृतसकललोकं किल तमः ।
गते तत्रेदानीं क्षयममलसूर्यागमहते
कृतार्थाः संकोचं विजहतु विनिद्रा जनदृशः ॥ ५ ॥

---

पं० १० क० पु० व्यावृत्त्य प्रणयादिति पाठः ।

जयति जनमरिष्टादुद्धरन्ती भवानी
जयति निजविभूतिव्याप्तविश्वः स्मरारिः ।
जयति च गजवक्त्रः सोऽत्र यस्य प्रसादा-
दुपरमति समस्तो विघ्नवर्गोपसर्गः ॥ ६ ॥

---

संपूर्णा इयं वृत्त्यनुसारिणी स्पन्दविवृतिः ।
कृतिस्तत्रभवतो महामाहेश्वराचार्यशिरोमणिराजानक-
श्रीमदुत्पलदेवपादपद्मानुजीविनो राजानकश्रीरामकण्ठस्य
इति शिवम् ॥ ॥

---

पं० १ जयतीति पद्यं क० ग० पुस्तकयोर्न विद्यते
पं० ८ ग० पु० श्रीरामस्येति पाठः

# स्पन्दकारिकाविवृतौ

## प्रत्येकं कारिकाणां संक्षेपार्थसंग्रहः

तत्रादौ

व्यतिरेकोपपत्तिनिर्देशे प्रथमे निःष्यन्दे

१ जगदुत्पत्ति-प्रलयकर्तृत्वलक्षणशंकरस्वरूपलक्षणम् ।

२ जगत उत्पत्तिस्थित्युपादानत्वाच्चिन्मात्रतत्त्वस्यैवानवच्छिन्नमहिमत्वनिरूपणम् ।

३ विभिन्नतया स्थितासु जाग्रदाद्यवस्थासु आत्मतत्त्वस्य उपलब्धृत्वस्वरूपादप्रच्युतिनिरूपणम् ।

४ अनन्तैः सुखित्व-दुःखित्वाद्यवस्थाविशेषैरनुषक्तस्य संवित्तत्त्वस्य एकावस्थानेनैव वृत्तिनिरूपणम् ।

५ वेदकैकस्वभावस्यात्मतत्त्वस्य सुखदुःखाद्यवस्थाननुषङ्गप्रतिपादनम् ।

६ परमार्थतः शिवतत्त्वस्यैव समस्तवेद्यसंपादने स्वातन्त्र्यनिरूपणम् ।

७ उक्तस्वतन्त्रशक्तेः शिवतत्त्वस्य श्रद्धादिसाधनावलम्बपुरःसरं स्वात्मत्वेन परीक्षणम् ।

८ सर्वकर्तुरीश्वरस्य वास्तवज्ञानात्मस्वस्वभावमवलम्ब्य पुरुषस्य तत्तुल्यस्वातन्त्र्यादिनिष्पत्तिनिरूपणम् ।

२ सार्वरूप्येण सर्वव्यतिरिक्तत्वेन च द्विप्रकारायाः पार-
मेश्वरशक्तेः चतुर्ष्वपि जागरादिषु पदेषु विभुत्व-चिन्म-
यत्वप्रविभागनिरूपणम् ।

३ परशक्तिस्फाराश्रयणात् लब्धस्वस्वरूपस्य परमेश्वरा-
नुग्रहोदितशुद्धप्रमातृभावस्य, अहं सुखी-दुःखीत्यादी-
नां सत्त्वादिगुणस्पन्दानामपरिपन्थित्वनिरूपणम् ।

४ पारमेश्वरानुग्रहराहित्येन विमूढधिय उक्तसत्त्वादिगु-
णस्पन्दानां दुस्तरसंसाराब्धौ निपातित्वप्रदर्शनम् ।

५ परशक्तितत्त्वविवेकस्य अव्याहतोत्साहस्याचिरान्निज-
स्वरूपोपलब्ध्यनुशासनम् ।

६ आत्मस्वरूपविवेचनक्षमप्रज्ञातिशयस्य प्रबुद्धस्य क्रोध-
हर्षरागाद्यापतितावस्थानामपि प्रतिष्ठितस्पन्दोपल-
ब्ध्युपायतयातिदेशनम् ।

७ अवश्यकरणीयवचसः प्रभोराज्ञाशुश्रूषावधानाभ्या-
सवत् समस्तवृत्तिप्रत्यस्तमयजाग्रद्वृत्त्यन्तर्लीनतुरी-
यदशावेद्यनिरूपणम् ।

८ उक्ताभ्यासदार्ढ्यात् सद्गुरूपदेशप्रत्यभिज्ञापिततुरी-
यदशाप्रत्यवमर्शस्य प्रबुद्धस्य बाह्याभ्यन्तराध्वातिक्र-
मपरमपदविश्रान्तिलाभादेशनम् ।

९ ईश्वरशक्तिपातप्रभावात् प्रत्युदितसमस्तज्ञानदृष्टेः प्रबु-
द्धस्य देहाद्यहंप्रत्ययवियोगानुशासनम् ।

१० उच्चिचारयिषायां शिवाभेदोपपत्त्या स्वीकृतसाम-

र्थ्यानां मन्त्राणामिन्द्रियव्यापारवत्साधकस्याप्रति-
हतसामर्थ्यादेशनम्।

११ उक्तमन्त्राणां शिवादभिन्नस्वरूपतया परमकारणे
स्वस्वभावे एव शिवे सुदृढात्मप्रतिपत्तिरूपाविलीनिता-
देशनम् ।

विश्वस्वभावशक्त्युपपत्तौ तृतीये निःष्यन्दे

१ संवेद्यघटसुखादौ संवेदनाभेदसंविदुपलब्धेर्जीवस्य
सर्वमयत्वानिरूपणम् ।

२ भोक्तुरेव भोग्यभावेन सर्वत्र संस्थानपरामर्शदार्ढ्या-
त् शब्दार्थचिन्तासु शिवावस्थानुशासनम् ।

३ इत्थमशेषवस्तुव्यक्तिविचित्रं विश्वं स्वनिर्मितचराचर-
भावक्रीडनकोपरचितलीलामात्रतया पश्यतः साध-
कस्य जीवन्मुक्ततादेशनम् ।

अभेदोपलब्धौ चतुर्थे निःष्यन्दे

१ साधकस्य स्मर्तव्यदेवताविषये तादात्म्याधिगमोप-
देशः ।

२ उक्ततादात्म्यावस्थाधिगमस्य शिवात्मताप्राप्तिस्वभा-
वाभेदसमापत्त्युपायप्रतिपादनम् ।

३ इत्थमवधानवतो जीवस्य जागरावस्थायामिच्छापूर्व-
कयथेष्टार्थप्रथनादेशनम् ।

४ स्वस्वभावप्रत्यवमर्शाविहितस्य जागरवत् स्वप्नेऽपि
स्वातन्त्र्येण स्वाभिमतार्थप्रत्यक्षीभवनादेशनम् ।

५ जागरास्वप्नलक्षणपदद्वये यथोक्तसंवित्तिसमाधानापरित्यागात् योगिनः समाधानादेशनं, तदन्यथात्वे भावसृष्टिपारतन्त्र्यादेशनं च ।

६ चेतोवधानेऽपि अदृष्टार्थवस्तुन आत्मसामर्थ्यात् प्रत्यक्षीभवनानिर्देशः ।

७ तथा दूरस्थानामपि अभिमतार्थानां सर्वज्ञस्वात्माभेदपरामर्शाभ्यासात् झगिति प्रत्यक्षभिवनादेशनम् ।

८ सर्वकर्तृत्वस्वातन्त्र्यलक्षणात्मीयसामर्थ्याक्रमणादस्य योगिनः क्षुत्तृडादिजयनिरूपणम् ।

९ परस्परव्यतिरिक्तदेहमात्राहंभावलक्षणप्रतिबन्धभङ्गात् अद्वयचिन्मात्रस्वात्मप्रतिष्ठिताहंकारस्य योगिनो निर्विघ्नतया सर्वज्ञत्वादिगुणाभिव्यक्तिनिरूपणम् ।

१० आविर्भूतसत्यात्मप्रत्ययस्य सहजानन्दलाभात् शरीरमान्द्यादियातनापगमनिरूपणम् ।

११ ग्लानिकारणभूताज्ञानविनाशहेतोः स्वस्वभावाभासविकासस्य स्वरूपप्रतिपादनम् ।

१२ निःशेषेणानुन्मीलितदेहाहंप्रत्ययेण योगिना प्राप्यफलतया अभीष्टानामणिमादिसिद्धीनामुक्तोन्मेषाभ्यासप्रभावसिद्धस्य योगिनो विघ्नपरम्परारूपत्वेन आदेशनम् ।

१३ पूर्वोपदिष्टात्मस्वरूपोपलब्ध्यभ्यासात् निवृत्तनानात्वदर्शनभ्रान्तेः स्वसंवित्प्रकाशेनान्तर्लीनाखिलभावजातस्य स्वानुभवसिद्ध्यधिगमादेशनम् ।

१४ सर्वानुभवदशासु संपन्नसुज्ञानदृष्टेः स्वात्मनि तदभिन्नतया आरोपितसर्वभावविषयस्य तद्भावजातकर्तृत्वानाक्रमणातिदेशनम् ।

१५ अद्वयचिन्मात्रात्मस्वरूपस्य परमेश्वरस्यैव निजमायाशक्त्या चिक्रीडिषोः अनन्तभावराश्यात्मावविभासयिषयापशुस्वरूपप्रतिपादनम् ।

१६ गृहीतपशुभावस्य चिदात्मनो विषयप्रवृत्त्या स्वरूपोदयप्रच्युतेः स्वातन्त्र्यादिगुणापगमनिरूपणम् ।

१७ इत्थं चिदात्मन उक्तलक्षणपशुत्वापत्तेः शब्दसंभेदनशीलानां सदोदितशक्तीनां हेतुतया निरूपणम् ।

१८ पशुत्वयोगिन्याः बन्धयित्र्याः क्रियारूपेण परिणतायाः, तथा शिवात्मकस्वस्वभावप्रत्यवमर्शरूपतया मोक्षसिद्धिप्रदत्वात् ज्ञानात्मिकायाश्च एकस्या एव शक्तेरभेदप्रतिपादनम् ।

१९ उक्तपशुत्वापत्तेरन्तःकरणाद्याश्रयपुर्यष्टकयोगस्यापि हेतुतया निर्देशः ।

२० निर्दिष्टावस्थाप्तेः पारतन्त्र्यात्संसरतोऽस्य जीवस्य संसारक्षयहेतुप्रतिज्ञानम् ।

२१ अस्यैव पशुत्वमापन्नस्य चिदात्मनः प्राक्प्रतिपादितसर्वज्ञताद्यैश्वर्यलक्षणस्वस्वभावपतित्वाभिव्यक्तेरुपायान्तरानुशासनम् ।

इति स्पन्दविवृतौ कारिकासंक्षेपार्थसंग्रहः समाप्तः ।